## KAMASUDDHI

THE LATE PROF. M. HIRIYANNA

(*In Aryan Path*)

This is a play in one Act; and its theme, as indicated by the title, is the purification of connubial love. The old Indian attitude towards this form of love was of two kinds. Some thought that, because it can so easily become sensuous, the only course for a wise man to adopt was to turn away from it once for all. This ascetic ideal indeed is, for instance, the lesson conveyed in the *Buddha-carita*, an epic poem by Asvaghosha (1st century A.D.). Kama is figured there as Mara or death and the poet describes how he was completely frustrated in his efforts to lure Buddha away from his spiritual quest. But such extreme asceticism was, by no means, the prevailing ideal of life in ancient India; it was transforming love rather than eliminating it—the cleansing of the lamp instead of putting out the light. That is the message, for instance, of Kalidasa's epic the *Kumara Sambhava*. Here also love suffers frustration, but it is only love as an impulse of the moment. It is soon revived in a thoroughly purified form ; and the poet shows, in his masterly way, how such sublimated love is the very life and light of the world.

It is love in the latter sense that is the theme of the present work ; and, by a happy play on the word *ananga* (one of the names of Kama in Sanskrit) which may also be taken to mean 'not ancillary', the author represents it as the supreme value of life. The style is reminiscent of Kalidasa's epic ; and the plot aims at artfully explaining the reason for the discomfiture of Kama as narrated there. Most of the characters that appear here are allegorical like Love, Passion, Spring, Virtue and Wealth, but the reader hardly feels that they are abstractions. The handling of the subject is so realistic, and the dialogue is so lively throughout. Dr. Raghavan is well known for his wide acquaintance with Sanskrit literature and criticism. The present publication shows that he is endowed with the poetic gift as well.

# ॥ कामशुद्धिः* ॥

डाक्टर् वे. राघवशर्मणा सन्दृब्धा

स्रष्ट्रीं तामीशितुश्शक्तिं प्रपद्ये कामनामिकाम् ।
संपद्यतां स मे ब्राह्मो रसो रतिरितीरितः ॥

(प्रविश्य)

कविः—मन्ये, अलमेतावता पूर्वरङ्गेण । अल्पारम्भः क्षेमाय ।

(प्रविश्य)

मित्रम्—सखे! किमद्य आरभ्यते, यस्यैवं महान् क्षेमोदर्क आशास्यते ?

कविः—अद्य रङ्गवेद्यां लघुं कञ्चन चाक्षुषं क्रतुं प्रवर्तयितुमुत्सुकोऽस्मि ।

मित्रम्—अनाहूतोऽध्वरं गच्छेदिति अहमपि प्राप्त इव ।

कविः—साधु सखे! जितं सौहार्देन सारस्येन च। आराधनानां परममेतत्, चिदभ्रविभ्रमभगवदुपज्ञं भारतर्षं नाट्यम्। गुणानां सदुदयोऽद्य प्रहर्षयति नश्चेतः । वैजयिकोऽयं मुहूर्तश्शारदनवरात्रमहोत्सवशोखरीभूतः । विविच्य कविना गुम्फिताश्शब्दा इव चात्र संस्कृतसेवासमितौ मिलितास्सर्वे एव रसवन्तः । अवसरश्चाधुना कविसार्वभौमस्य कालिदासस्य समर्हणम् । कथं नाम सांप्रतं न नटिष्यति हृदयं हृदयालोः ?

मित्रम्—किं तत्प्रारिप्स्यमानं नाट्यं, यत्पर्याप्नोति निजगुणैरेतावन्तमुदात्तं सन्दर्भमुपस्कर्तुम् ? कश्चायमुत्साही कविः—

---

* मद्रपुरी - आकाशवाणी - रङ्गे प्रयुक्तमिदम् ।

**कविः**—सखे, कस्य वा संस्कृतप्रणयिनो न विदिता अनितरसुलभानुकार पाण्डित्यप्रक्रियाः परस्परोपस्कारिप्राच्यप्रतीच्यविद्यासंपत्त्यसाधारणाः कुलपतयः कुप्पुस्वामिशास्त्रिणः। तेषां जयपताकास्विव दिक्षु दिक्षु-विद्योतमानेषु शिष्येष्वन्यतमो, राघवो नाम,—

**मित्रम्**—ननु त्वमेव!

**कविः**—(सस्मितम्) अहमद्य परिषदमेनामाराधयितुमुत्सहे स्वसन्दृब्धेन कामशुद्धिनाम्ना एकाङ्करूपकेण।

**मित्रम्**—किमिदं कामशुद्धिर्नाम वस्तु?

**कविः**—वस्तु चैतत् कवेः कालिदासस्य कुमारसंभवात् महाकाव्यादुत्थितम्, तस्य च हृदयभूतम्। अत्र नायिका रतिः, न पार्वती। नायकश्च मदनः, न परमेश्वरः।

**मित्रम्**—वैचित्र्येषा वर्धयति नः कौतूहलम्। कदा च यवनिका अपसरिष्यति?

**कविः**—अपसृतैव। किन्तु कथमन्या यवनिकात्र? आः, ज्ञातम्। एष मदनमहिष्या रतेः प्रासादैकदेशः कोपागारः। मन्ये देव्या रत्यात्र 'सत्याग्रहः' क्रियत इति। श्रूयत एवास्याः दीर्घदीर्घो निश्श्वासः।

(ततः प्रविशति यवनिकान्तरितविग्रहा रतिः)

(प्रविशन्ति कतिपयनिमेषानन्तरं मन्दमन्दं मन्मथः। अपटीमपक्षिप्य पश्यति विस्रस्तमूर्धजं विपर्यस्ताङ्ककं शयानां निःश्वसतीं रतिम्।)

**कामः**—ऊष्मेव भक्ष्यस्य, वक्रिमेव वचसः, कामपि कान्तिमाधत्ते कोपोऽस्याः शरीरस्य। अथवा निरोज इव साहित्यं, निर्मन्यु प्रेम केवलपेशलिम्ना पर्यवस्यत्यरुचौ।

(इति उपसृत्य कान्तां कचेषु स्पृशति। सा च तस्य हस्तम् अवक्षिपति)

रतिः—अलं चाटुभिः । अतिलघ्वी चिकित्सा समादृता ।

कामः—प्रिये ! कोऽयं सहसा अत्यारूढः कोपरोगः ? किमपराद्धमनेन त्वच्छन्दानुवर्तनैकसमाहितचेतसा मया ? अद्य नूतनापदानकीर्तिकुसुमोत्तंसलालसस्तव साहाय्यमपेक्षमाणस्त्वरयात्र समागतोऽस्मि । अपश्यंश्च त्वां भोगागारे, शृण्वंश्च त्वां कोपागारप्रविष्टां भग्नहृदयः, न जाने, किं कुर्यां, कथं वा त्वां प्रसादयेयमिति । अद्य संमोहनेन विश्वामित्रं रम्भायाः कुंभदासं करिष्यामीति देवेन्द्राय प्रतिज्ञातवानस्मि ।

रतिः—(कर्णौ पिधाय) अविहा ! अविहा ! अलमेतैरपदानैः, अथवा अपवादैः । अहो कियतीं नाम लज्जां नावहन्त्येतानि ते 'मन्मथः, कन्दर्पः, मदनः' इति दुष्टानि नामानि ?

कामः—कथं मम धर्मपत्नी सत्यपि त्वं मामेवमवमनुषे ?

रतिः—भर्तुरप्यवलिप्तस्य धर्माधर्ममजानतः ।
उत्पथं प्रतिपन्नस्य भार्या भवति शासिका ॥

कामः—आः किम् ?

रतिः—(सावेगम्) आम् । किमितोऽपि दारुणं पापमारभ्यतां केनापि, यद्भवानुदीरितेन्द्रियं प्रजापतिं स्वसुतायामभिलाषवन्तमकरोत्, अर्थधर्मौ च सिन्धोस्तटावोघ इव प्रवृद्धः पीडयत्यनवरतम्, एकपत्नीव्रतशीलाश्च पुंश्चलीकुरुते !

कामः—अयि कथं नाम मामेवमुपालभसे, यत्प्रसादाज्जगन्त्यानन्दमनुभवन्ति ।

रतिः—नैष आनन्दः, तदाभास एव, यं जगन्त्यद्य त्वद्वशंवदान्यनुभवन्ति । कथं नाम तत्र शुभः प्रमोदस्संपद्येत, यत्र नाहं रतिर्बद्धभावास्मि ।

त्वमद्य कोऽप्युन्मादो व्याधिर्वा जनानाम् । म्रियन्ते च जनास्त्वया पराक्रान्ताः, यतो मन्ये, त्वमपि मार इति प्रथसे लोकेषु ।

(ततः प्रविशति कामस्य सखा मधुः)

कामः—सखे मधो, काले समागतं त्वया । अद्य वयस्यसाहाय्यशरणोऽस्मि । अकाण्डे प्रतीपतां गता प्रियतमा भूताविष्टेव तत्तत् प्रलपति, निन्दति मां, मन्ये नानुयास्यति च मां मदीयजैत्रयात्रायाम् । एतस्यास्सान्त्वन-भारः त्वयि न्यस्तः ।

(इत्युक्त्वा निष्क्रान्तः कामः)

मधुः—सखि ! किं करोतु तपस्वी तव कान्तः, यदि त्वं तस्य सामिधेनी नानुगच्छसि ?

रतिः—कथं निर्लज्जं पापप्रवृत्तिषु साहाय्याय त्वमपि मां निमन्त्रयसे ?

मधुः—किमिदम्, अश्रुतपूर्वाः पापपुण्यविवेका निष्पतन्ति ते वदनात् ? किमत्र पापम् ?

रतिः—अपेहि । अनुरूपो वयस्यस्त्वम् । नाहं सहे क्षणमपि तवावलोकनं, सन्निकर्षं वा । तदाहमनुव्रता भविष्यामि मे भर्तुः, यदा स रक्षो देवो भविता ।

मधुः—भगवान् मकरकेतनस्ते रक्षः । मां पुनः कथं वर्णयिष्यति भवती ?

रतिः—वसन्त इति मृषा ते नाम । यतो न त्वया लोको वसति, किन्तु म्रियत एव । सत्यं त्वं कालविशेषः ।

मधुः—भर्तारमपहाय च न जाने किं वा भवती विधित्सतीति ।

रतिः—तपश्चरिष्यामि । अद्य तपस उद्युञ्जानामेव मां सखा ते विहन्ति स्म । पश्य, इतस्समाधय उपविष्टास्मि ।

(इति समाधिमास्थिता रतिः । निष्क्रान्तश्च मधुः)

(प्रविशति कतिपयनिमेषानन्तरं नन्दी शिवगणेष्वन्यतमश्च)

नन्दी—यदा पितुरवमानेन प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी सती योगवियुक्तदेहा पुनर्जन्मने शैलवधूं प्रपेदे, तदाप्रभृत्येव विमुक्तसङ्गः पतिः पशूनामप्यपरिग्रहस्सन्, अकामोऽपि केनापि कामेन, स्वयं विधातापि तपसः फलानां, स्वयं हिमाद्रेः प्रस्थे कठोरे तपसि वर्तते। स च स्वतपसोऽपि कठोरतरेण कुतोऽपि प्रवृत्तेन तपसा सहसा भिद्यमानसमाधिराज्ञापयन्मां 'नन्दिन्! कः कुत्रैवमस्माकमपि ह्रीपदमादधानमनुत्तमं तप आतिष्ठत इति ज्ञात्वागच्छ' इति। तदाज्ञानुवर्तिना च मया सर्वोऽपि हिमाद्रिः विचितः, भ्रान्ता इतरे पर्वताः, निपुणं निरीक्षितं च दण्डकादिवनेषु। तपः कुतः केवलभोगभूमौ देवलोके? तथापि कयापि शक्त्या समाकृष्ट इत आगतोऽहम्। मार्गितप्रायस्स्वर्लोकश्च। अयं च तपःशत्रोः प्रद्युम्नस्य प्रासादः। हन्त! कथमत्र किमपि ज्योतिस्तपति। एहि प्रविश्य विलोकयावः।

(उभौ निरूपयतः)

गणेष्वन्यतमः—भगवन्नन्दिन्, स्त्री हि तपस्यति!

नन्दी—अहो!

पदं सहेत भ्रमरस्य पेशलं
शिरीषपुष्पं न पुनः पतत्त्रिणः।
तपः शरीरैः कठिनैरुपार्जितं
तपस्विनां दूरमधः करोत्यसौ॥

सैषा मीनकेतनस्य महिषी भगवती रतिः। कथमियं भर्तुरन्तिक एव वर्तमानाप्यद्यैवमेकाकिनी प्रसंख्याने प्रविष्टा। दुःशकमत्रैतस्यास्तपोऽग्निना प्रदीप्ते स्थाने क्षणमपि स्थातुमस्माभिः। एहि निवेदयावो भगवत एव। मन्ये, तमुद्दिश्यैव तपस्यत्येषा।

(इति निष्क्रान्तौ)

(ततः प्रविशतः रतेश्चेटचौ धर्मसंवर्धनी अर्थसखी च)

**धर्मसंवर्धनी**—हञ्जे, अर्थसखि, नूनमत्युत्तमं तपस्तप्यते देव्या। अद्य स्वर्लोकवीथीष्वटन्त्येवमेवं वार्ता अश्रौषम्—भूम्यां गृहिण्यो भर्तृषु विमुखाश्शौचमातिष्ठन्ते। कामिन्यश्च त्यक्तकामकथा व्रतपरायणा जाताः। उन्मादिन इव च भ्रमन्ति दरिद्राणगात्रा नायका इति।

**अर्थसखी**—मया च श्रुतं, पण्याङ्गना अपि धनिष्वागतेष्वपि अनास्थाः पुराण श्रवणाय देवायतनानि गच्छन्तीति।

**धर्मस०**—मन्ये सर्वमेतदस्मत्स्वामिनो रतिमन्मथयोर्विप्रयोगेण, देव्यास्तपसा च।

**अर्थस०**—किमन्यदत्र कारणम्? परन्तु न जाने, कदा वा देवी समाधेरुत्थास्यति, उपोषिता लोकाश्च सुखपारणां करिष्यन्तीति।

**धर्मस०**—सखि, कोऽपि देव आगच्छतीव। भवितव्यं भगवता शशाङ्कशेखरेण।

**अर्थस०**—सत्यम्, निटिलनयनो हर एव आयाति। एहि, इतोऽपसृत्य स्थास्यावः।

(इति किञ्चिदपसृत्य)

(प्रविशति भगवान् परमेश्वरः)

**परमेश्वरः**— इयं सा, यस्यास्तपो मदीयमपि तपो दूरमधःकृत्य, मामप्यत्राकर्षत्। दुर्ललितस्य भर्तुः पापानां भार्या स्वयं प्रायश्चित्तं कुरुते। सैषा मदीयस्य आनन्दस्य विवर्तः, यं जना रतिमाहुः, यां च दुर्विनीतः कामः बलात्साहचर्ये नियोजयितुं यतते, न शक्नोति च तथा कर्तुम्।

(दृष्ट्वा परंज्योतिरुपारता रतिः अक्षिण्युन्मील्य पश्यति। पश्यति पुरश्च तदेव परं ज्योतिः परमेश्वररूपेण)

रतिः—धर्मेणार्थेन मोक्षेण सामरस्यं दधाति यः ।
ताद्दक्कामस्वरूपाय नमो योगेश्वराय ते ॥

(इति नमस्करोति)

परमेश्वरः—अयि, किमर्थमेवं तप आहतम् ?

रतिः—भगवन्, धर्मसंमोहे निपतितास्मि—

अधर्मे वर्तमानस्य भर्तुस्त्यागः किमिष्यताम् ।
उतैतत्साहचर्येण पाप एव निपत्यताम् ॥

परमेश्वरः—आयुष्मति ! न भर्तृपरित्यागः शोभते । नतरां शोभते पापसाहचर्यम् । तमनुप्रविश्य सान्त्वैरुपायान्तैरश्च कुशलया भार्यया उच्छृङ्खलं धावन्भर्ता निग्रहीतव्यः । लोहान्तरैः धातुभिश्च दूषितमिति न हेम परित्यक्तव्यं, किन्तु पाकेन शोधयितव्यम् ।

रतिः—अनार्यमब्रह्मण्यमेष मे भर्ता चरति । तपस्विनः, पूज्यान्देवान्, सतीश्च देवतोपमाः व्याकुलयति । वन्ध्या मे प्रार्थनाः । न जाने कथं वायं शुद्ध्यतीति । सर्वमेव धातुपिण्डं, न किञ्चिदत्र हेमेति भाति ।

परमेश्वरः—अलं नैराश्येन ।

रतिः—भगवतश्चरणमेव शरणम् ।

परमेश्वरः—जाते, यस्मिन् पापे जनः प्रवृत्तः, तत्रैव परां काष्ठां नीत्वा तत् पापं विनाशयितव्यम् । यदेष ते भर्ता प्रजापतिं स्वसुतायां प्रेरयामास, यच्च ऋषीन् सतीश्च च्यावयति चारित्रात्, तत् फल्गु । तथाहं सन्दर्भं घटयिष्यामि, यथैष दुर्विदग्धो मय्येव निजास्त्रबलं प्रकटयिष्यति । तदैष मदीयनिटिलाक्षिनिष्पतितेन वैराग्यमयतेजसा दग्धः, भस्मनि निहितः, विद्रुतसर्वमलः, नवोदितार्क इव उद्योतमान उत्थास्यति । तदा च तवानुरूपो भर्ता, ममाप्यनुकूलः प्रियस्सेवको

(ततः प्रविशतः रतेश्चेटयौ धर्मसंवर्धनी अर्थसखी च)

**धर्मसंवर्धनी**—हञ्जे, अर्थसखि, नूनमत्युत्तमं तपस्तप्यते देव्या। अद्य स्वर्लोकवीथीष्वटन्त्येवमेवं वार्ता अश्रौषम्—भूम्यां गृहिण्यो भर्तृषु विमुखाश्शौचमातिष्ठन्ते। कामिन्यश्च त्यक्तकामकथा व्रतपरायणा जाताः। उन्मादिन इव च भ्रमन्ति दरिद्राणगात्रा नायका इति।

**अर्थसखी**—मया च श्रुतं, पण्याङ्गना अपि धनिष्वागतेष्वपि अनास्थाः पुराण-श्रवणाय देवायतनानि गच्छन्तीति।

**धर्मस०**—मन्ये सर्वमेतदस्मत्स्वामिनो रतिमन्मथयोर्विप्रयोगेण, देव्यास्तपसा च।

**अर्थस०**—किमन्यदत्र कारणम्? परन्तु न जाने, कदा वा देवी समाधेरु-त्थास्यति, उपोषिता लोकाश्च सुखपारणां करिष्यन्तीति।

**धर्मस०**—सखि, कोऽपि देव आगच्छतीव। भवितव्यं भगवता शशाङ्कशे-खरेण।

**अर्थस०**—सत्यम्, निटिलनयनो हर एव आयाति। एहि, इतोऽपसृत्य स्थास्यावः।

तिष्ठतः

(इति किञ्चिदपसृत्य)

(प्रविशति भगवान् परमेश्वरः)

**परमेश्वरः**—इयं सा, यस्यास्तपो मदीयमपि तपो दूरमधःकृत्य, मामप्यत्रा-कर्षत्। दुर्ललितस्य भर्तुः पापानां भार्या स्वयं प्रायश्चित्तं कुरुते। सैषा मदीयस्य आनन्दस्य विवर्तः, यं जना रतिमाहुः, यां च दुर्विनीतः कामः बलात्साहचर्ये नियोजयितुं यतते, न शक्नोति च तथा कर्तुम्।

(दृष्ट्वा परंज्योतिरुपारता रतिः अक्षिण्युन्मील्य पश्यति। पश्यति पुरश्च तदेव परं ज्योतिः परमेश्वररूपेण)

रतिः —धर्मेणार्थेन मोक्षेण सामरस्यं दधाति यः ।
तादृक्कामस्वरूपाय नमो योगेश्वराय ते ॥

(इति नमस्करोति)

परमेश्वरः —अयि, किमर्थमेवं तप आदृतम् ?

रतिः —भगवन्, धर्मसंमोहे निपतितास्मि—

अधर्मे वर्तमानस्य भर्तुस्त्यागः किमिष्यताम् ।
उतैतत्साहचर्येण पाप एव निपत्यताम् ॥

परमेश्वरः —आयुष्मति ! न भर्तृपरित्यागः शोभते । नतरां शोभते पापसाहचर्यम् । तमनुप्रविश्य सान्त्वैरुपायान्तरैश्च कुशलया भार्यया उच्छृङ्खलं धावन्भर्ता निग्रहीतव्यः । लोहान्तरैः धातुभिश्च दूषितमिति न हेम परित्यक्तव्यं, किन्तु पाकेन शोधयितव्यम् ।

रतिः —अनार्यमब्रह्मण्यमेष मे भर्ता चरति । तपस्विनः, पूज्यान्देवान्, सतीश्च देवतोपमाः व्याकुलयति । वन्ध्या मे प्रार्थनाः । न जाने कथं वायं शुद्ध्यतीति । सर्वमेव धातुपिण्डं, न किञ्चिदत्र हेमेति भाति ।

परमेश्वरः —अलं नैराश्येन ।

रतिः —भगवत्श्चरणमेव शरणम् ।

परमेश्वरः —जाते, यस्मिन् पापे जनः प्रवृत्तः, तत्रैव परां काष्ठां नीत्वा तत् पापं विनाशयितव्यम् । यदेष ते भर्ता प्रजापतिं स्वसुतायां प्रेरयामास, यच्च ऋषीन् सतीश्च च्यावयति चारित्रात्, तत् फल्गु । तथाहं सन्दर्भं घटयिष्यामि, यथैष दुर्विदग्धो मय्येव निजास्त्रबलं प्रकटयिष्यति । तदैष मदीयनिटिलाक्षिनिष्पतितेन वैराग्यमयतेजसा दग्धः, भस्मनि निहितः, विद्रुतसर्वमलः, नवोदितार्क इव उद्योतमान उत्थास्यति । तदा च तवानुरूपो भर्ता, ममाप्यनुकूलः प्रियस्सेवको

भविष्यति । युवयोश्च तदा शमस्तुष्टिश्चेति पुत्रः पुत्री च भविष्यतः । अस्माकं मनसः प्रथमं रेतो ह्येतत्, यत्काममाहुर्लोकाः, सर्वस्या अपि सृष्टेर्बीजम् । तस्य शोधनमस्माकमवश्यकार्यतया प्राप्तम् । नाद्याप्यहमेनमङ्गीकृतवान् । अरूपहार्यस्सन्, अनङ्गीकृत्यैव मत्सन्निधाने तमनुज्ञास्यामि । अशुद्ध एव कामः पुमर्थान्तराणामङ्गम् । शुद्धः पुनरनङ्गः, अङ्गी, स्वयं परमः पुरुषार्थः ।

रतिः --अनुगृहीतास्मि भगवन् । अहमपि भर्तुर्नवावतारं प्रतिपालयन्ती तपस्येवमेव वर्ते ।

परमेश्वरः--वर्तस्व वत्से । तपो हि परमं साधनं, तपो हि कुरुते सर्वं, तपो हि धारयति पृथिवीं, तपो हि लक्ष्मीः, तपो ह्यानन्दः । किमितोऽप्याशास्यम्--

(भरतवाक्यम्)

ज्ञानाग्निपरिपूतो यः सर्वक्षेमैककल्पकः ।
स वः प्रकाशतां कामः मत्स्वरूपादनन्तरः ॥

(साञ्जलि रतिस्तिष्ठति । साभयहस्तं परमेश्वरः । पतति यवनिका)

**॥ इति श्रीराघवशर्मणा विरचितं कामशुद्धिर्नाम एकाङ्कं रूपकम् ॥**

---

# "महात्मा"

डा॰ वे॰ राघवः

महात्मना महात्मनामनुत्तमा गतिर्गता।
असाधि यन्न जीवता तनुन्यजास्तु तत्कृतम् ॥१॥

कुष्ठविष्ठे शोधयता जुगुप्सा येन वै जिता।
ददतोऽप्यपकारिभ्यो द्वेषो यस्य न कोऽप्यभूत् ॥२॥

रक्षां संन्यस्यतो यस्य नासीदेव महाभयम्।
आततायिन्यपि क्षान्त्या कारुण्यं यत्र पुष्कलम् ॥३॥

परपीडासहृदये यस्मिन् वैष्णवलक्षणम्।
निर्द्वन्द्वा निरहङ्कारा यस्य प्रज्ञा प्रतिष्ठिता ॥४॥

एष गान्धीव देशेऽस्मिन् आर्षे पुण्येऽपि भारते।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥५॥

गीता गङ्गा तथा गौरी गिरिश्चेत्यत्र ये पुनः।
हेतवो भारतोन्नत्यै तेषु गान्ध्यप्यनन्तिमः॥६॥

एकैकनेत्रपतदश्रुमृजेच्छयायं
यश्चक्षमे न जगदार्तमिदं विमोक्तुम्।
उद्धर्तुमेव कृपणां जनतां दरिद्र-
नारायणस्स्वयमतप्यत वेषवृत्तेः॥७॥

हित्वा तमात्मतप आर्जितभारतीय-
स्वातन्त्र्यमोदमधिदेहलि चार्धरात्रे।
यो 'राम-रहीम्' इति जपन् धृतशान्तिवर्त्तिः
नोआखालिगाढतिमिरे प्रचचार पद्भ्याम्॥८॥

Noakhali yatra

एकः किल तद्धृदये चरमां चिक्षेप घातुकां गुटिकाम्।
विपरीतचेष्टितैर्नः विद्धं हृदयं पुरैवास्य॥९॥

'चक्रं ग्रामोद्धारो मद्यत्यागश्च हरिजनाभ्युदयः।
जातिविवादविरामः सत्याभेदिन्यहिंसा च॥' १०॥

एतद्धि गान्धिभगवत्षाड्गुण्यं, तस्य शाश्वतोऽप्यात्मा।
पूजयतैतद्भक्त्या तेन स देशश्च पूजितो नूनम्॥११॥

बृहदपि विचित्रतरमपि बह्वपि तत्स्मारकं भवनम्।
अर्हति क्लेशस्यापि किमेतद्वचनानुसारसत्यस्य॥१२॥

मैत्र्या सत्येन तपसा त्यागेन समभावतः।
भारता भारतं देशं कुरुत स्मारकं परम्॥१३॥

मैवं बहु विकीर्याश्रु दुर्बलीकुरुतात्मनः।
तद्वाक्याचरणाद्धर्मात्स्रोतैर्मा चापधावत॥१४॥

अनृतो द्वेषी हिंस्रः कोऽपि न तस्यास्थि भस्म वा स्पृशतु।
निन्दकचराश्च नुतिभिः प्रहसनमधुना न कुर्वन्तु ॥२५॥

क्रुद्धो बभूव स बभूव च जेसुकृस्तुः
गान्ध्यप्यभूत्स शममेव वदन् हतश्च ॥
शान्तिः कदा बत मृगत्वविजित्वरा स्यात्
अर्हा भवेम च कदा नु महात्मनां नः ॥२६॥

रात्रौ कुर्वन्नण्डस्फोटं सर्वदेशसभा दिवा ।
हे लोक यथार्जवं ते गान्धिनो दर्शनं शृणु ॥२७॥
अध्यात्मी चक्रेऽसौ क्रूरं कूटं च राज्यतन्त्रं यः ।
सत्याग्रहेण तपसा योऽप्यचलांश्चालयामास ॥२८॥
"सत्यान्नास्ति परो देवः नाऽहिंसातोऽप्युपासना ।
समत्वं परमो योगो वसुधैकं कुटुम्बकम्" ॥२९॥
एष आदेश एषोऽप्युपदेशो महात्मनः ।
एषैव वेदोपनिषद् 'अहिंसैवैकतारकम्' ॥२०॥
परस्परं नाभ्यहिंसन् यस्मिंस्तद् गान्धिनेप्सितम्
रामराज्यं जगत्यस्तु रामगान्धिप्रसादतः ॥२१॥

# " कामकोटीति कार्मणगृहीतमिवान्तरङ्गम् "

## श्रीकाञ्चीकामाक्षीस्तुतिः

'कविकोकिल' - 'सकलकलाकलाप' -

डाक्टर् वे. राघवेण

प्रणीता

७, श्रीकृष्णपुरं वीथी, रायपेट्ट

मद्रास- १४

१९६९



काञ्च्यां कामकोटिपीठस्था श्रीकामाक्षी

## " कामकोटीति कार्मणगृहीतमिवान्तरङ्गम् "

डा. वे. राघवः

उद्भ्राम्य तं तमति नाम जनित्रि मूढ-
चित्ते मनोरथचयं विवशोऽद्य मत्तः ।
स्मेरं समुद्वहदुदोघदयावलोक-
माधावमीक्षितुमहो कथमाननं ते ॥ १ ॥

काञ्चीति कामनयनाधरणीति काम-
कोटीति चेतसि मुहू रसयन् परोक्षम् ।
हृष्यत्तनुर्द्रुतमनाः परिलीनवृत्ति-
राधावमद्य कथमम्ब तवाङ्घ्रिसीम ॥ २ ॥

तां ते सुधारसकिरस्मितमञ्जरीं त्व-
दापाटलोष्ठपुटरङ्गनटीं मुहुश्च ।
आपाद्य चेतसि तया हृतचेतनोऽह-
माधावमीक्षितुमिमां कथमम्ब काञ्चीम् ॥ ३ ॥

---

* इतः प्रायश्चत्वारिंशद्वत्सरेभ्यः पूर्वं यूना सता मया यदा तत्प्रथमतया काञ्ची, तत्र कामाक्षी, अस्मदाचार्याश्च साक्षात्कृताः, तदानीमेते द्वाविंशतिः श्लोकाः कृताः । नाद्यावधि मुद्रिताः ॥

पीयूषनाडयति जीवकलायते नः
मूकं विरिञ्चयति शङ्करत्यबोधम् ।
अत्युच्चमुच्चमिति किं किमुदीक्ष्य मात-
राधावमीक्षितुमहो तव हासविद्याम् ॥ ४ ॥

कल्याणकन्दममृताम्बुधिफेनरेखा
प्रस्तावना त्रिजगदद्भुतकान्तिलास्ये ।
लावण्यचन्द्रसुषमाप्रथमांशुकः त-
दाधावमीक्षितुमहो कथमुत्स्मितं ते ॥ ५ ॥

सा मातरुत्स्मितकला मम मानसान्ते
दृष्टोदया मृदु निरस्य तमः, ततान ।
विश्रामशान्तमुदमीक्षितुमुत्सुकस्ता-
माधावमद्य कथमम्ब तवोपकण्ठम् ॥ ६ ॥

बोधं ददाति महतीं विदधाति शान्तिं
सौख्यं दिशत्यमितमुत्स्मितदर्शनं ते ।
इत्याप्तवाक्यविवशीभवदुत्कचित्त-
माधावमद्य कथमम्ब पुरीं तवेमाम् ॥ ७ ॥

मन्दं तदुत्स्मितमये तव मातरुद्य-
ते मय्यनुग्रहवचः कृतमित्युदीक्ष्य ।
त्वत्सन्निधेः प्रमुदि वेगविकृष्यमाणः
आधावमद्य कथमम्ब विशालवीक्षे ॥ ८ ॥

एकाम्रनाथमयि दासयितुं तवेयं
दूती मृदुस्मितकला ह्यभिसार्यमाणा ।
उत्कलयन्निति बहु स्मितदृष्टितर्षा-
दाधावमद्य कथमम्ब तवोपशल्यम् ॥ ९ ॥

अन्तर्हृदुत्तटनिसर्गसमस्तजीव-
प्रेम्णो बहिः प्रसृमरं परिवाहमम्ब ।
साक्षात्समीक्षितुमहो करुणां तवाक्ष्णो-
राधावमत्र कथमद्य करालवेगः ॥ १० ॥

कामाक्षि चेतसि जनित्रि तदा तदा मे
प्रादुर्भवंस्तव दयातुमुलो दृगन्तः ।
न प्रापि वर्णयितुमेव दरिद्रवाच-
श्चित्तं परं मुदि समुत्सुकयन्नतीव ॥ ११ ॥

द्रक्ष्यामि किन्नु दयमानविशालवीक्षां
काञ्च्यां तव प्रशमिताखिलभेदखेदाम् ।
उत्कण्ठितश्चिरमिति प्रबलं समीप-
माधावमद्य तव देवि मदालसाक्षि ॥ १२ ॥

कल्लोलिनीव रतिरुद्द्रवितेव जीव-
प्रेमेन्दुकान्तिरखिलेश्वरि ते दयेक्षा ।
मां यक्षिणीव विचकर्ष चिराय वेगा-
दाधावमद्य तदिमां भवतीं दिदृक्षुः ॥ १३ ॥

कालाम्बुवाहति वितप्तहृदां, जडानां
चित्स्फूर्तिसौधरसति स्वरुणान्तनेत्रि ।
त्वत्का कृपेति बहु बह्वभिजृम्भिताशः
आधावमीक्षितुमहो तव लोचनान्तम् ॥ १४ ॥

ध्यायंश्चिराय तव शीतललोचनान्त-
श्च्योतत्कृपां प्रथितबोधकवित्वदात्रीम् ।
स्तब्धं जडं स्तिमितमेव समाहितोऽह-
माधावमम्ब रसनाय दृशाद्य तस्याः ॥ १५ ॥

जीवातुधारति मरन्दमनोज्ञगन्ध
मेदस्विकाव्यरचनास्विति कीर्तिमस्याः ।
श्रुत्वा त्वदीयनयनान्तवहद्द्दयायाः
आधावमम्ब कथमद्य जवेन काञ्चीम् ॥ १६ ॥

मातः स्मिताभिशिशिरं करुणोर्मिलाक्षं
कामाक्षि वक्त्रमनिशं हृदि भावयंस्ते ।
स्तैमित्यमापममृताब्धिषु लाल्यमानः
प्राप्तेऽद्य मय्यलसताम्ब कथं प्रसादे ॥ १७ ॥

मातः स्मितानि मयि ते विहृतिं विधास्य-
न्त्यार्द्रा लसिष्यति दृशां सरणिस्तथेति ।
अत्याशया बत तवान्तिकमागतोऽहं
हन्त प्रसीद सरसं न कथं तवास्यम् ॥ १८ ॥

मातः स्मितं क्व तव तत्, तव किं दृगन्ते
कोलाहलं न विदधाति कृपोग्रपूरः ।
स्मेरेण वक्त्रशशिना कुरु मे विकासं
दृष्टीस्तरङ्गय शिवे दयमानकोणाः ॥ १९ ॥

काञ्चीति मूकमुखरीकृतिलब्धवर्ण-
कारुण्यवीचिलदृशां विहृतिस्थलीति ।
सर्वज्ञपीठनगरीति च किञ्च काम-
कोटीति कार्मणगृहीतमिवान्तरङ्गम् ॥ २० ॥

किं नैनमापतितमङ्घ्रियुगे त्वदीये
कामाक्षि ते शिशिरयन्त्यलसस्मितानि ।
भग्ने कथं मयि पतन्ति नवाद्य मातः
ताम्रत्विषस्तव दृशः करुणावहन्त्यः ॥ २१ ॥

शीलं विशोधय जगज्जननि प्रकृष्ट-
बोधं विधेहि दिश भक्तिमनश्वरां मे ।
अप्यम्ब भावघनमादृतचारुरूप-
मुद्बोधयाशु मयि देवि वचोविलासम् ॥ २२ ॥

---

# "कामकोटीति कार्मणगृहीतमिवान्तरङ्गम्"

## श्रीकाञ्चीकामाक्षीस्तुतिः

To
Dr & Mrs
Satya Vrat
V Raghavan


'कविकोकिल' - 'सकलकलाकलाप' -

डाक्टर् वे. राघवेण

प्रणीता



७, श्रीकृष्णपुरं वीथी, रायपेट्ट

मद्रास- १४

१९६९



काञ्च्यां कामकोटिपीठस्था श्रीकामाक्षी

## " कामकोटीति कार्मणगृहीतमिवान्तरङ्गम् "

डा. वे. राघवः

उद्भाव्य तं तमति नाम जनित्रि मूढ-

चित्ते मनोरथचयं विवशोऽद्य मत्तः ।

स्मेरं समुद्वहदुदोघदयावलोक-

माधावमीक्षितुमहो कथमाननं ते ॥ १ ॥

काञ्चीति कामनयनाधरणीति काम-

कोटीति चेतसि मुहू रसयन् परोक्षम् ।

हृष्यत्तनुर्द्रुतमनाः परिलीनवृत्ति-

राधावमद्य कथमम्ब तवाङ्घ्रिसीम ॥ २ ॥

तां ते सुधारसकिरस्मितमञ्जरीं त्व-

दापाटलोष्ठपुटरङ्गनटीं मुहुश्च ।

आपाद्य चेतसि तया हृतचेतनोऽह-

माधावमीक्षितुमिमां कथमम्ब काञ्चीम् ॥ ३ ॥

---

* इतः प्रायश्चत्वारिंशद्वत्सरेभ्यः पूर्वं यूना सता मया यदा तत्प्रथमतया काञ्ची, तत्र कामाक्षी, अस्मदाचार्याश्च साक्षात्कृताः, तदानीमेते द्वाविंशतिः श्लोकाः कृताः । नाद्यावधि मुद्रिताः ॥

पीयूषनाडयति जीवकलायते नः
मूकं विरिञ्चयति शङ्करत्यबोधम् ।
अत्युच्चमुच्चमिति किं किमुदीक्ष्य मात-
राधावमीक्षितुमहो तव हासविद्याम् ॥ ४ ॥

कल्याणकन्दममृताम्बुधिफेनरेखा
प्रस्तावना त्रिजगदद्भुतकान्तिलास्ये ।
लावण्यचन्द्रसुषमाप्रथमांशुकः त-
दाधावमीक्षितुमहो कथमुत्स्मितं ते ॥ ५ ॥

सा मातरुत्स्मितकला मम मानसान्ते
दृष्टोदया मृदु निरस्य तमः, ततान ।
विश्रामशान्तमुदमीक्षितुमुत्सुकस्ता-
माधावमद्य कथमम्ब तवोपकण्ठम् ॥ ६ ॥

बोधं ददाति महतीं विदधाति शान्तिं
सौख्यं दिशत्यमितमुत्स्मितदर्शनं ते ।
इत्याप्तवाक्यविवशीभवदुत्कचित्त-
माधावमद्य कथमम्ब पुरीं तवेमाम् ॥ ७ ॥

मन्दं तदुत्स्मितमये तव मातरुद्य-

त्ते मय्यनुग्रहवचः कृतमित्युदीक्ष्य ।

त्वत्सन्निधेः प्रमुदि वेगविकृष्यमाणः

आधावमद्य कथमम्ब विशालवीक्षे ॥ ८ ॥

एकाम्रनाथमयि दासयितुं तवेयं

दूती मृदुस्मितकला ह्यभिसार्यमाणा ।

उत्कल्पयन्निति बहु स्मितदृष्टितर्षा-

दाधावमद्य कथमम्ब तवोपशल्यम् ॥ ९ ॥

अन्तर्हृदुत्तटनिसर्गसमस्तजीव-

प्रेम्णो बहिः प्रसृमरं परिवाहमम्ब ।

साक्षात्समीक्षितुमहो करुणां तवाक्ष्णो-

राधावमत्र कथमद्य करालवेगः ॥ १० ॥

कामाक्षि चेतसि जनित्रि तदा तदा मे

प्रादुर्भवंस्तव दयातुमुलो दृगन्तः ।

न प्रापि वर्णयितुमेव दरिद्रवाच-

श्चित्तं परं मुदि समुत्सुकयन्नतीव ॥ ११ ॥

द्रक्ष्यामि किन्तु दयमानविशालवीक्षां
काञ्च्यां तव प्रशमिताखिलभेदखेदाम् ।
उत्कण्ठितश्चिरमिति प्रबलं समीप-
माधावमद्य तव देवि मदालसाक्षि ॥ १२ ॥

कल्लोलिनीव रतिरुद्द्रवितेव जीव-
प्रेमेन्दुकान्तिरखिलेश्वरि ते दयेक्षा ।
मां यक्षिणीव विचकर्ष चिराय वेगा-
दाधावमद्य तदिमां भवतीं दिदृक्षुः ॥ १३ ॥

कालाम्बुवाहति वितप्तहृदां, जडानां
चित्स्फूर्तिसौधरसति स्वरुणान्तनेत्रि ।
त्वत्का कृपेति बहु बह्वभिजृम्भिताशः
आधावमीक्षितुमहो तव लोचनान्तम् ॥ १४ ॥

ध्यायंश्चिराय तव शीतललोचनान्त-
च्योतत्कृपां प्रथितबोधकवित्वदात्रीम् ।
स्तब्धं जडं स्तिमितमेव समाहितोऽह-
माधावमम्ब रसनाय दृशाद्य तस्याः ॥ १५ ॥

जीवातुधारति मरन्दमनोज्ञगन्ध

मेदस्विकाव्यरचनास्विति कीर्तिमस्याः ।

श्रुत्वा त्वदीयनयनान्तवहद्दयायाः

आधावममम्ब कथमद्य जवेन काञ्चीम् ॥ १६ ॥

मातः स्मिताभिशिशिरं करुणोर्मिलाक्षं

कामाक्षि वक्त्रमनिशं हृदि भावयंस्ते ।

स्तैमित्यमापममृताब्धिषु लाल्यमानः

प्राप्तेऽद्य मय्यलसताम्ब कथं प्रसादे ॥ १७ ॥

मातः स्मितानि मयि ते विहृतिं विधास्य-

न्त्यार्द्रा लसिष्यति दृशां सरणिस्तथेति ।

अत्याशया बत तवान्तिकमागतोऽहं

हन्त प्रसीद सरसं न कथं तवास्यम् ॥ १८ ॥

मातः स्मितं क्व तव तत्, तव किं दृगन्ते

कोलाहलं न विदधाति कृपोग्रपूरः ।

स्मेरेण वक्त्रशशिना कुरु मे विकासं

दृष्टीस्तरङ्गय शिवे दयमानकोणाः ॥ १९ ॥

काञ्चीति मूकमुखरीकृतिलब्धवर्ण-
कारुण्यवीचिलदृशां विहृतिस्थलीति ।
सर्वज्ञपीठनगरीति च किञ्च काम-
कोटीति कार्मणगृहीतमिवान्तरङ्गम् ॥ २० ॥

किं नैनमापतितमङ्घ्रियुगे त्वदीये
कामाक्षि ते शिशिरयन्त्यलसस्मितानि ।
भग्ने कथं मयि पतन्ति नवाद्य मातः
ताम्रत्विषस्तव दृशः करुणावहन्त्यः ॥ २१ ॥

शीलं विशोधय जगज्जननि प्रकृष्ट-
बोधं विधेहि दिश भक्तिमनश्वरां मे ।
अप्यम्ब भावघनमादृतचारुरूप-
मुद्बोधयाशु मयि देवि वचोविलासम् ॥ २२ ॥

---

DR. V. RAGHAVAN, M.A., PH.D.
*Professor of Sanskrit*
UNIVERSITY OF MADRAS
MADRAS-5

7, SRI KRISHNAPURAM STREET,
ROYAPETTAH, MADRAS-14
Phone: 85091

31.10.68

~~[illegible]~~ To Mrs Usha Satyavrat

In confirmation of what I told you in person, in Delhi, on 27th:

Enclosed is an account of my background

The original title of "Andapramanakam Dhanyam" of Tolstoy is "A Grain As Big As a Hen's Egg".

Re: Tolstoy, his Estate, Green Twig etc. you consult the Biography of Tolstoy mentioned in the ~~footnote~~ of my translation

Also enclosed is an account of my Muttuswami Dikshita Carita Mahakavya.

Kṛti means Kirtana ~~or Song~~ or prabandha, a song; in a special sense, it is a high-class artistic creative composition as contras-

DR. V. RAGHAVAN

Born: 22nd August 1908 at Tiruvarur, Tanjore District, Madras State, India.

School Education: Board and Government High School, Tiruvarur.

Passed S.S.L.C. 1924 with Chemistry and Botany as Special subjects and Sanskrit as IInd Language.

Stood first in English among the successful candidates at the S.S.L.C. Public Examination and secured a prize for the same. Was leading sportsman of the school and took medals in many tournaments. Studied Sanskrit at home in traditional style with Pandit Appaswami Sastrigal of Sengalipuram and Sri Narayana Vajapeyar of Tiruvalangadu.

College Education: Presidency College, Madras. Passed Intermediate (1925-27) with Ancient History, Logic and Sanskrit, with distinction in all the three subjects.

Sanskrit Hons.(M.A.) 1927-30. Studied Nyaya Vaisesika and Sankhya-Yoga as special subjects besides Comparative Indo-European Philology and other general subjects in Sanskrit, under Mm. Prof. S. Kuppuswami Sastri, M.A., I.E.S.; pursued also study of Kavya and Nyaya with other traditional Pandits like Rishiyur Santanam Iyer. Passed in First Class with First Rank and x Five Gold Medals.

While at College, got the Visvanatha Sastri and Narasimhachari Prizes for English and Sanskrit Essays at the College and the Valmiki Day Essay Prizes and the Sanskrit ~~Orixxxx~~ Oratorical Contest Gold Medal at the Sanskrit Akademy, Madras.

Sarasvati Mahal Library, Tanjore: 1930 July to December: Superintendent, in-charge of the New Descriptive Catalogues of Sanskrit manuscripts of the Library.

Research Scholarship & Ph.D. : 1931 September - 1935: Worked as Madras University Research scholar under Mm. Prof. S. Kuppuswami Sastri on the voluminous unpublished manuscript <u>Srngara Prakasa</u> of King Bhoja and wrote his Thesis on the same and on its valuation by Profs. Sylvain Levi, F.W. Thomas and A.B. Keith, was awarded the Ph.D. Degree by the University of Madras.

New Catalogus Catalogorum, University of Madras:

1935 November started work on the New Catalogus Catalogorum as a Research Assistant and has continued that work up to date.

Lecturer, Reader & Professor, University of Madras:

1939, Junior Lecturer

1948, Senior Lecturer in charge of the Department.

1950 Reader & Head of the Department.

1955, Professor & Head of the Department.

Foreign Tour and work abroad: (a) 1953-54, Toured Thirteen countries of Europe, visiting University Centres of Sanskrit and allied Studies, Institutes, Museums and Libraries; lectured and also a catalogued 20,000 manuscripts in the unsurveyed collections in different countries of Europe and wrote a book "Sanskrit and Allied Indological Studies in Europe", (University of Madras)

(b) 1958 Visited U.S.S.R. on a Government of India Indological Delegation; visited Oriental Institutes, Libraries & Manuscripts collections.

(c) 1962-63 Visited Nepal twice for work on the Mss. Collection of the Bir Library and National Library, Kathmandu.

(d) 1964 Toured United States on a Leadership Invitation of the State Department; and visited leading University Centres, Libraries etc. lectured and surveyed manuscripts collections in U.S.

(e) 1964 Toured Japan, Phillipines, Viet-Nam, Cambodia, Thailand and Malaysia.

Universities: Has been connected with several Indian Universities as Member of Boards of Studies or other special Experts' Committees and Examiner: Has been Member of ~~x~~ several Special Committees of the University Grants Commission.

Promotions of Sanskrit: 1956 appointed by Government of India as Member of the SANSKRIT COMMISSION set up for reporting on the condition of Sanskrit learning in the country and recommending steps to promote and improve the same; toured the country in this capacity and visited numerous Sanskrit Institute and Mss. Libraries. 1956: Member of the CENTRAL SANSKRIT BOARD set up by the Education Ministry for the promotion of Sanskrit Studies. Member of INDOLOGY COMMITTEE OF THE MINISTRY and Correspondent for the Rare Texts Edition Scheme of the Ministry for Publication of Sanskrit Mss. Catalogue.

1963-66 Chairman of the CENTRAL SANSKRIT INSTITUTE (Kendriya Sanskrit Vidya Pitha) set up by the Ministry of Education.

1964 - Invited to deliver the First Convocation Address to Sri Kameshwar Singh Sanskrit University, Darbhanga and set forth the character, nature and work of Sanskrit University.

Sanskrit Manuscripts: Apart from being engaged on the work of the New Catalogus Catalogorum, has visited and examined numerous collections of Mss. in public and private possession in the country. For Education Ministry, prepared a scheme for publication of Mss. Catalogues with Central ~~xx~~ Government assistance and has been correspondent~~x~~ of the Scheme.

1959, worked on the Manuscripts Committee of UGC. for visiting manuscripts collections in University centres and recommending proposals for similar promotion of Mss. - work in University centres. Participated in organising the Education Ministry Seminar in 1963 on Mss. and Textual criticism and brought a han[d]book on the occasion 'Mss. Catalogues, Editions (Govt. of India. Toured Europe, U.S.S.R., U.S. Japan and S.E. Asia, surveyed Mss collections there and prepared inventories of uncatalogued coll[ec]tions (1953-54, 1957, 1964).

Visited Kathmandu twice to advice the Nepal Govt. on the Mss. in the Bir & National Libraries at the instance of the Indian Aid Mission.

Learned Institutions & Research Projects: Member and Secretary,
Kuppuswami Sastri Research Institute. Formerly Secretary and now Vice-President, Sanskrit Academy, Madras.
Member, Supervising Research and Publication, Sanskrit Education Society, Madras.
Member, Advisory & Editorial Committee, Adyar Library, Madras.
Member, All-India Oriental Conference.
Joint Secretary, Samskrita Visva Parishad, Bombay
Member, B.O.R.I., Poona.
Member, Linguistic Society of India.
Member, Asiatic Society of Bengal, Calcutta.
Member, Indian P.E.N.
Member, Indian Institute of World Culture, Bangalore.
Member, Royal India, Pakistan, Ceylon Society, London.
Member, Editorial/Advisory Committee, New Sanskrit Dictionary, Deccan College Research Institute, Poona-6.
Member, Purana Project, All-India Kashiraja Trust, Banaras.
Member, The Indian Advisory Committee of the American Institute of Indian Studies, Poona-6.

All India Oriental Conference: As General Secretary from 1951 to 1959. Contributed to the toning up and development of the work of the Conference and its publications.
1959. Vice-President. 1960-62: President.

Government of India, Ministry of Education: Member of Central Advisory Board of Archaeology; Gazetteer Revision Committee; Executive Committee of National Commission for Co-operation with Unesco.
Committee for Central Institute of Indology.
Committee for Scholarships in Music and for selecting Artistes for foreign delegations.

Ministry of Information & Broadcasting: Special Advisor for Sanskrit for All India Radio. Advisory Board (Music) for AIR.
Advisory Committee of the Publications Division.

Other Govt. Committees: Philatelic Bureau for advising of Ministry of Posts & Telegraphy on special stamps for Kalidasa, Tyagaraja etc.
Panel for Screening of Obscene Literature, Ministry of Finance.

The National Academies: Member from inception of its General Council and Convenor of the Sanskrit Board of the Sahitya Akademi. Also Member of its Executive Council for some terms.

Member of General Council and Executive Committee, almost from inception, of the SANGEET NATAK AKADEMI and also its publication and other Sub-Committee; and of the State Auxiliary, Madras State Sangita Nataka Sangham.

Other autonomous bodies set up by Education Ministry:

The National Book Trust.

The Indian Institute of Advanced Studies, Simla.

Other Art-Bodies: Secretary, Music Academy, Madras.

Member, Sangeet Natak Akademi & National School of Drama, Delhi.

Vice-President, Bharatiya Natya Sangh, Delhi.

President, the Madras Natya Sangh.

President, Samskrita Ranga, Madras.

Member, All-India Kalidasa Festival Committee, Ujjain.

Art Purchases Committee, Ministry of Education.

Editing: Journals, Serials and Periodic Publications:

Journal of the Music Academy, Madras, From Vol. V. 1936 onwards

Journal of Oriental Research, Madras (from Vol.XIV, onwards).

The Samskrita Pratibha, Sahitya Akademi.

The Samskrita Ranga Annual, Madras.

The Malayamaruta, Central Sanskrit Institute, Tirupati

The Publication of Kuppuswami Sastri Research Institute and Music Academy, Madras.

The Madras University Sanskrit Series.

Member of the Editorial/Advisory Committee of the Annals of Oriental Research, University of Madras.

The Adyar Library Bulletin, Madras

Purana Bulletin.

Sangeet Natak, Delhi.

International Conferences: Attended the International P.E.N. Dublin 19..

Attended the International Music Education Conference of Unesco, Brussels, 1953

Attended the International Union of Orientalists, Paris, 1953.

Attended the Association of British Orientalists, Edinburgh,19

Attended the Annual Meeting of the American Oriental Society, New York, 1964.

~~Thx~~Attended the Association for Asian Studies, Washington,1964.

Attended the Annual Meeting of the American Philosophical Society, Philadelphia, 1964.

Attended the International Society for the History of Religion, New York, 1964.

Attended XXVI International Congress of Orientalists, New Delhi 1964. - Member of the Organising Committee.

Recognitions & Awards :"KAVIKOKILA" for his poetic composition in Sanskrit and ~~xxxxxxxxxx~~ "SAKALA-KALA-KALAPA" for his versitil talents in and contributions to different branches of study, both conferred by His Holiness Sri Sankaracharya of Kanchi Kamakoti Pitha.

P.V. Kane Gold Medal for distinguished Indological work by the Asiatic Society, Bombay.

Ecole Francise d' Extreme-Oriental, Paris: Honorary Membership.

The Noble Order of St. Martin; Austria: Hony. Membership and Gold Medal for distinction in Arts and Sciences.

All India Oriental Conference: Elected President, Classical Sanskrit Section, XV Session, Bombay, 1949.

Elected Fine Arts & Technical Sciences Section XIX Session, University of Delhi, 1959.

Elected General President XXIst Session, Srinagar, Kashmir,1961.

"PADMA-BHUSHAN" - Republic Day Award from the President of India, January 1962.

Fellowship of the Sangeet Natak Akademi (National Academy of Music, Dance & Drama), 1964.

Invited by Govt. of India(Ministry of Information & Broadcasting to deliver the Patel Memorial Lectures.

SAHITYA AKADEMI PRIZE for Sanskrit Research for his book Bhoja's Srngara Prakasa, 1966.

His contribution in the form of separate books, larger or small, Number 70 and Papers in various Journals, Periodical publications and special volumes, over 700.

oooOOOooo

# "KING MANUNITI CHOLA"

The following verses present a story from the legends of the renowned Chola Kings of Tamilnad. There is scarcely a Tamil child who will not recount with bated breath this story of the terrible righteousness of King Manu-niti-chola of Tiruvarur.

"Tiruvarur (in Tanjore District), one of the ancient Chola Capitals, famed in the annals of Tamil history and culture, was being ruled over by king Manu-niti-kanda-chola, so named because of the rigour with which he maintained law and righteousness, not swerving from the path laid down by Manu. He had established a bell at the entrance to his palace, which any being in his kingdom, wanting justice to be done or grievance to be redressed, could freely approach and ring, and to whose call the king immediately responded.

One evening the King's son, the young Prince, while going round the main streets of the Town in his chariot, ran over a calf; the mother cow rang the bell at the King's palace; the King issued forth, saw the tragedy and decreed that the Prince should pay with his life for the rash drive; accordingly the chariot was driven over the Prince, who cheerfully laid down his body for the ordeal. Pleased at King Manuniti's unparalleled enforcement of righteousness, God Tyagaraja, Patron-Deity of Tiruvarur, manifested Himself, revived both the calf and the Prince, and blessed them all."

The story has been sung and dramatised in old Tamil opera-compositions; the Periapuranam of the 12th century which narrates the lives of the Saivite Saints

speaks of this Tiruvarur story ; in an inscription dated 28.D. 1123 of Parakesari Vikramachola's time, one Palayur Udayan Banaraja describes himself as a descendant of the person who was minister to Manu Chola at the time when the King sentenced his son to death for crushing a calf. In the Ceylonese Buddhistic chronicle, Mahavamsa, the story is found and the Tamil Chola King figuring in it is given the name Elara.

At Tiruvarur itself a beautiful monument presenting the tragic story in stone stands to this day on the North-east end of the Tyagaraja Temple, and a photograph of the same is reproduced here.

**V. Raghavan.**



Sculpture of the Car running over the Prince at the North-East Gate of the Tyagaraja Temple at Tiruvarur

# ॥ महीपो मनुनीतिचोलः ॥

डाक्टर् वे. राघवः

(१)

चोलभूमिषु कवेरजाकरो-
 ल्लालितासु कमलापुरे[1]पुरा ।
आरराज मनुनीतिचोल इ-
 त्याख्ययार्थयुजयावनीपतिः ॥१॥

तत्पुरे सदभिधे कदाचन
 व्योम्नि पाटलितपश्चिमानने ।
विप्रमज्जनजलाहतिध्वना-
 [2]विन्दिरालयतटेषु सर्पति ॥२॥

उद्बभूव पथि पश्चिमे[3] ध्वनिः
 प्रावृषेण्यघनघोषमेदुरः ।
सद्य एव ददृशे रथोत्तमः
 सान्ध्यमेघ इव जङ्गमो जवी ॥३॥

व्योमचारिभिरिवोद्धृताङ्घ्रिभिः
 फेनिलाननमहो तुरङ्गमैः ।
मुक्तरश्मि परिमत्तयन्तृकं
 खे व्यखेलि मरुदेणसन्निभैः ॥४॥

1. Tiruvarur. 2. Indiralaya=Kamalalaya, the huge tank at Tiruvarur. 3. On the west main car street.

एष राजसुत इत्युदीरणा-
रम्भपौरवदनेभ्य उद्ययौ ।
दारुणो हृदयदारणो रवः
स्तम्भिता नतिसमुद्धृताः कराः ॥५॥

भग्नजानु तुरगैर्दिवि स्थितं
प्रोच्चचाल पतयालुशेखरः ।
'क्रीत्कृते' रपि रथाङ्गमन्वयो
घट्टिताश्च परितः परस्परम् ॥६॥

बाष्पपूरपटलावृतानन-
स्पन्दशून्यजनतानिरीक्षितः ।
भ्रान्तमूढवदनो रथात्क्षणात्
स्थापितात्स युवराडवातरत् ॥७॥

पथ्युदग्रमुदि विप्लुतो लुठन्
कोऽपि चक्रमुखपातपेषितः ।
तर्णकोऽङ्ग ददृशे ह्यघोरथं
रक्तपङ्कगतमांसपिण्डकः ॥८॥

गोपुरे[1] रथजवेन नर्तिता
वानराः किलकिलाश्च तत्यजुः ।
तच्च वैशसमिवेक्षितुं खगैः
खे समेत्य वलनैरभूयत ॥९॥

1. The western temple tower on that street which is full of monkeys and over which birds always hover in the evenings.

सान्ध्यसञ्चरणमोदनिर्गतः
पथ्यवाप्तशिशुघातकर्शितः ।
सन्नसन्नतविवर्णिताननः
साश्रुकम्पजनशून्यवीक्षितः ॥

तं पुरोगतबलिं स वत्सकं
नेक्षितुं प्रभुरसौ युवप्रभुः ।
संकुचद्द्रुतरुदश्रुकाणितः
पादचारमभिसौधकं गतः ॥१०-११॥ (युग्मकम्)

(२)

धरणीतलवैशसं त्विदं
स्तिमिता वीक्ष्य परस्परं ततः ।
कथयन्त इवात्मनश्शुचं
व्यमिलन्नृक्षगणा नभःपथे ॥१॥

मनुनीतिमहीपतिर्निशा-
मुखनृत्यत्कमलापुरेश्वरम्¹ ।
समुपास्य, निरीक्ष्य कर्म च
प्रथमं याममभूदनिद्रितः ॥२॥

उपशान्तपुरीदिगुद्वलद्-
गुरुहुम्भामशृणोत्तदा नृपः ।
क्रमशश्च गतां सुतारतां
निमिषेण स्वगृहं समागताम् ॥३॥

---

1. God Tyagaraja at Tiruvatur, a dancing deity

परिवर्तितकन्धराकुल-
क्षितिपश्रोत्रयुगेऽपतत् क्षणात् ।
निजसौधबहिःप्रतिष्ठिताद्
[1]ऋतघण्टानिलयान्महाध्वनिः ॥४॥

"विषये मम जन्तुरल्पकोऽ-
प्यपथोद्वृत्तखलेन पीडितः ।
स्वयमेत्य ममालयं स्पृशे-
द्यदि घण्टामिह कल्पितां मया ॥
अपि निश्चयवबुध्य तं क्षणाद्
व्यवहारं परिशोधयाम्यहम् ।"
इति कल्पितया हि घण्टया
स नृपोऽगान्मनुनीतिसत्प्रथाम् ॥५-६॥ (युग्मकम्)

ऋतबोधकघण्टिकाध्वने-
र्बहिरेत्य क्षितिपोत्तमः पुरः ।
पशुमुन्मुखकृष्टघण्टिका-
गुणमालोक्य गृहान्निरव्रजत ॥७॥

भृशफेनिललम्बितास्यया
स गवानीयत पश्चिमायनम् ।
समुपेत्य च गोपुराग्रतः
करुणं प्रेक्षि गवा स भूपतिः ॥८॥

स गवा सह सीददन्तरः
प्रवहद्बाष्पझरः पुरो नृपः ।

---

1. Bell of Justice.

निजसूनुरथं व्यलोकय-
न्नयलज्जाव्यसनैरिवाचलम् ॥९॥

(२)

पाश्चात्यघण्टापथमेत्य तस्थौ
निष्पन्दगात्रा जनता प्रभाते ।
अवाच्यमन्योन्यमवेक्षमाणा
रोमाञ्चमापन्निजराजकृत्ये ॥१॥

गतेऽह्नि तद्दृशसहष्टचसोढा
दूरं गतः प्रातरिदं भविष्यत् ।
प्रपञ्चचक्षुस्तुतरामसोढा
स गोपुरेणावृत एव तस्थौ[1] ॥२॥

कृपाणधाराव्रनघृष्ट भूपो
नैवोदपश्यन्मनुनीतिचोळः ।
मुखं स्वपुत्रस्य न वाश्रु पौर-
शुद्धान्तमन्त्र्याननतः प्रवाहि ॥३॥

[2]त्यागेशसंस्थानमुखो महीपः
क्षणं निमील्याक्ष्यविकारिवर्णः ।
यावत्स्थितस्तावदुपाहरत् स्वं

---

1. Owing to the high temple wall and the higher tower here, it takes a long time for the morning sun-light to fall on this street.

2. Tyagaraja, the deity at Tiruvarur.

देहं भाग्यं युवराट् प्रसन्नः ॥४॥

उन्मुक्तमर्मच्छिदुदग्रनादाः
स्वहस्तविक्षिप्तमुखं जनौघाः ।
न सेहिरे कर्णयुगं पुरस्ता-
त्प्रख्याप्यमाने रथधर्मराजे ॥५॥

क्षणात्समुद्धावितुरङ्गघोग्रः
संवर्तमेघप्रमघोरघोषः ।
रथो व्यपागान्मनुनीतिसूनो-
र्देहोपरि स्वं प्रकटय्य भारम् ॥६॥

(४)

नाद्यापि पौरहृदिनानि गतानि शान्ति
नाद्यापि तस्य नृपतेर्ह्रदु मानसं वा ।
सद्यः पपात नभसः कुसुमप्रवृष्टिः
काप्याविरास महनीयसुधांशुशोभा ॥१॥

वत्सेन स्वपदान्वितेन स नृपः,
सा गौर्निजोधोमुखा-
धावद्वत्सयुता, जनाश्च परमा-
नन्दान्तरङ्गैस्सह ।
मध्येनन्दनसूनसौरभमहं
साम्बं समाविर्भव-
त्स्मेरास्यं बत दृष्टवुश्च सकला-
स्त्यगप्रसन्नं महः ॥२॥



## By the Same Author

---

The New Catalogus Catalogorum

---

Bhoja's Sringara Prakasa
Some Concepts of Alankara Sastra
Number of Rasas

---

Anandaranga Champu
Mudrarakshasa Nataka Katha
Snushavijaya
Aryasatakavyakhya
Sringaramanjari

---

Rasalila
Kamasuddhi
Phalguna
On the Banks of the Cauvery
Gopa Hampanna
Svarajyaketu
Mahatma
Devabandi Varadaraja

V. B. Soobbiah & Sons, Bangalore-2

## By the Same Author

---

The New Catalogus Catalogorum

---

Bhoja's Sringara Prakasa
Some Concepts of Alankara Sastra
Number of Rasas

---

Anandaranga Champu
Mudrarakshasa Nataka Katha
Snushavijaya
Aryasatakavyakhya
Sringaramanjari

---

Rasalila
Kamasuddhi
Phalguna
On the Banks of the Cauvery
Gopa Hampanna
Svarajyaketu
Mahatma
Devabandi Varadaraja

V. B. Soobbiah & Sons, Bangalore-2

PUBLICATIONS OF DR.V. RAGHAVAN

Professor of Sanskrit, Madras University, Madras
No.7, Srikrishnapuram St., Royapettah, Madras-14.

--------

1. The New Catalogus Catalogorum, Pt.I. 1949. Revised Edn. 1968. University of Madras, Madras-5.

   (A complete Register of Sanskrit and allied works and Authors with lists of their manuscripts in India and abroad and edns.)

2,3,4. -do- Vol. II 1966; Vol.III, 1967; Vol.IV, 1968.

5. The Indian Heritage: An Anthology of Sanskrit literature in Translations - sponsored by Unesco 1957. Indian Institute of World Culture, Bangalore - Now on its 3rd edition.

6. Bhoja's Srngara Prakasa, Parts I & II, 1940, 1943. Complete Revised publication 1963 (1000 pages).

7. The Number of Rasas. 1940. Adyar Library, Madras, 2nd Edn. 1967.

8. Some Concepts of Alamkara Sastra. 1942. Adyar Library, Madras.

9. The Mahabharata (Condensed version, Translated with Notes etc.) 1935 - G.A. Natesan & Co., Madras.

10. The Bhagavata (Condensed Version, Translated with Notes etc.) 1937 - G.A. Natesan & Co., Madras.

11. Prayers, Praises and Psalms. Compiled from Sanskrit and Translated with Notes and indices 1939. G.A. Natesan & Co., Madras.

12. Sanskrit and Allied Indological Studies in Europe 1957, Madras University, Madras-5.

13. Yantras or Mechanical Contrivances in Ancient India. 2nd Revised edition 1955. Indian Institute of World Culture, Bangalore.

14. The Social Play in Sanskrit, 1953. Indian Institute of World Culture, Bangalore.

15. Love in the Poems and Plays of Kalidasa, 1955. Indian Institute of World Culture, Bangalore.

16. Modern Sanskrit Writings, 1956. Adyar Library, Madras. Also in Contemporary Indian Literature, 1957, Sahitya Akademi, New Delhi.

17. The Sushavijaya of Sundararaja Kavi. Edited with Original Commentary, 1944. University of Madras, Madras-5.

18. Aryasatakavyakhya, a new original Sanskrit Commentary, Poona, 1944.

19. Mudrarakshasa Natakakatha of Mahadeva. Edited with critical Introduction & Appendices. 2nd Edn. 1948. Sarasvati Mahal Library, Tanjore.

Language and Literature - Mauryan Period, ...

-do- New History of the Indian People, Vol.II, New Del[illegible]

Literary Criticism, Drama, Dance, Music - Encyclopaedia, Americ[illegible]

Sanskrit Literature, Music, Dance: Revised Indian Gazetteer, New Delhi.

Indian Poetry, Dictionary of Poetry and Poetics, New York.

Cultural Heritage of India, R.K. Mission, Institute of Culture, Calcutta.

Numerous articles in the Tamil Encyclopaedia, Madras.

# सावर्कर-वचनशुक्तिका-संचयः

डॉ. ना. ब. चितळे, पुसद

(विगतांकस्य शेषः)

येन केन प्रकारेण समाजे जागृतिर्भवेत्
अहोरात्रं यत्नशीलः अभवत् क्रान्तिकारकः ॥७५॥

मत्वा स्वभारतं राष्ट्रं हिंदुत्वैकाभिमानिनः
वर्तंते भारते देशे ते सर्वे एकजातयः ॥७६॥

इति धर्मं समालंब्य सर्वेषु समवर्तनात्
अवर्तयत् रत्नपुर्याम् अस्पृश्यत्वं विनाशयन् ॥७७॥

पतितं पावनं तत्र मंदिरं तेन स्थापितम्
अस्पृश्यास्तत्र गच्छन्ति दर्शनाय दिवानिशम् ॥७८॥

भेदवृत्तिनिवृत्यर्थम् अस्पृश्यैः सह भोजनम्
कृतं च कारितं तेन दुष्टरूढिप्रभंजकम् ॥७९॥

स्थानबद्धत्वनिर्बंधो यदा दूरीकृतस्तदा
संपूर्ण भारते तेन लोकजागरणं कृतम् ॥८०॥

हिंदुसभाध्यक्षपदं स्वीकृत्य समग्रभारतभ्रमणम्
अकरोत् लेखन-भाषण-संवादैर्जनमनांसि आकृष्य ॥८१॥

एवं संप्रस्थिते काले महायुद्धमभूत्तदा
ब्रिटिशानां बलं जातम् अल्पक्षीणपराक्रमम् ॥८२॥

स्वत्वस्य रक्षणं कर्तुम् असमर्थाऽभवन् हि ते
स्वातंत्र्यकांक्षिणे, दत्तं स्वराज्यं भारताय तैः ॥८३॥

स्वतंत्रं भारतं दृष्ट्वा प्रहर्षोत्फुल्लमानसः
धन्योऽहं कृतकृत्योऽहं तृप्तोहमिति सोऽवदत् ॥८४॥

किंतु स्वातंत्र्यजनितो महानंदोऽल्पकालिकः
अतः स्वार्थपरैर्लोकैस्तस्य क्रीडनकं कृतम् ॥८५॥

स्वराज्य-बालको जातस्तारुण्यपदलांछितः
तथापि तच्छरीरेऽस्मिन् चैतन्यं लुप्ततां गतम् ॥८६॥

मर्कटस्य गले माला रत्नकांचनसंयुता
अर्पितापि पुनस्तस्य भारभूतैव केवलम् ॥८७॥

एवं स्वराज्यं प्राप्तं हि तस्य पालनयोग्यता
नाधिकारस्थितैर्भ्रान्तैर्दर्शिता देशरक्षकैः ॥८८॥

हिंदुत्व-भारतीयत्व-राष्ट्रीयत्व-गुणैर्युताः
त एव भारते सन्ति राष्ट्रकार्य-सुसाधकाः ॥८९॥

अन्ये तु ऋणभारेण स्वस्य राष्ट्रस्य उन्नतिम्
साधितुं ये समिच्छन्ति कुर्वन्ति तुषकंडनम् ॥९०॥

अन्न-वस्त्र-निवासादि प्राणिमात्रैकजीवनम्
तदभावे स्वराज्यस्य महती निष्फला भवेत् ॥९१॥

ये जनाः स्वप्रदेशस्य रक्षणं कर्तुमुत्सुकाः
लीलया, सैन्यशस्त्रास्त्रैस्तद्राष्ट्रमिति कथ्यते ॥९२॥

यस्य देशस्य भूभागः ह्रियते शत्रुभिः सदा
तस्य देशस्य स्वातंत्र्यं पारतंत्र्याद्भयंकरम् ॥९३॥

स्वराष्ट्रस्य समुन्नत्यै परराष्ट्रान्महद्धनम्
ऋणरूपेण गृह्णन्ति ते सर्वे राष्ट्रघातकाः ॥९४॥

कामधेनुर्गृहे बद्धा तक्रभिक्षा गृहे गृहे
सत्यंगणे कल्पवृक्षे दारिद्र्यं द्वारि तिष्ठति ॥९५॥

कैर्दृष्टं न श्रुतं चापि अस्माभिस्तत् समीक्षितम्
ललाटे लिखितं दुःखं भारतस्य महात्मभिः ॥९६॥

पाकस्थानस्य निर्माणं जायते यदि भारते
प्राणांस्त्यजामीत्यवदत् स महात्मा सुनिश्चितम् ॥९७॥

श्रुत्वैतां घोषणां तस्य ननन्दुर्हिंदुबांधवाः
पाकस्थानस्य निर्माणमशक्यमितिवादिनः ॥९८॥

पाकस्थानस्य निर्मित्या भारतं शकलीकृतम्
तेन तद्गरलं पीतं सुखेन जठरे कृतम् ॥९९॥

हस्तक्षेपः कृतस्तेन न च स्वात्मार्पणं कृतम्
एवं भारतमातुश्च कृतं प्रेमप्रदर्शनम् ॥१००॥

पाकस्थानस्य निर्माणं तद्गणैरुररीकृतम्
भविष्य-कालिकापत्तिः सुतरां हि न लक्षिता ॥१०१॥

पाकस्थानस्य निर्माणे मुस्लीमानां स्थलान्तरम्
कर्तव्यम् न कृतं मूढैः राष्ट्रस्यैयं कथं भवेत् ॥१०२॥

सान्निध्यं विषसर्पस्य कस्यापि हि सुखाय न
शत्रून् च स्वगृहे कृत्वा राष्ट्रसौख्यं सुदुर्लभम् ॥१०३॥

पाकस्थानस्य निर्माण-प्रारंभोत्सव-दर्शने
हिंदंगनास्त्वसंख्येया नष्टा भ्रष्टाश्च खण्डिताः ॥१०४॥

पाकस्थानेन हिंदूनाम् अस्तित्वं निष्कुलीकृतम्
भारतेन तु म्लेंछानां वंशवर्धापनं कृतम् ॥१०५॥

श्रद्धानंद-यतेर्हिसा कृता येन अहिंदुना
तस्योपरि दयाभावं कर्तव्यमिति योऽवदत् ॥१०६॥

महात्मागान्धि-मूल्यं तु म्लेंछबंधोरपेक्षया
अल्पादल्पतरं मन्ये 'शौकदल्ली 'त्य गर्जत ॥१०७॥

एवं जात्याभिमानी स महात्मा मूर्धनि स्थितः
वक्तव्य किमवक्तव्यं श्रेष्ठचारित्र्यचिंतने ॥१०८॥

अस्मत्स्वाधीनकर्तव्यं ब्रिटिशैरपहारितम्
राज्यं; सुराज्यं कर्तुं तद्यतिष्यामो वयं ध्रुवम् ॥१०९॥

भागानगर-भूपोऽपि यदि तद्राज्यपालने
नेच्छुकः स्यात् तथाप्येनं स्थापयामो शनैः शनैः ॥११०॥

न च नेपालभूपालो काश्मीरनृपतिस्तया
वटोवरपुरस्योपि नायातस्तस्य दृक्पथम् ॥१११॥

पाकस्थानाय न तत् द्रव्यं देयं समुचितं भवेत्
वदत्स्वपीति लोकेषु हठादाचरितं खलु ॥११२॥

शतकोटचर्धभागं हि द्रव्यं दातव्यमब्रवीत्
पाकस्थानाय, तस्याज्ञा तद्गणैः शिरसावृता ॥११३॥

तद्द्रव्यसहयोगेन कृतः शस्त्रास्त्रसंग्रहः
भारतस्य विनाशाय पाकस्थाननिवासिभिः ॥११२॥

[क्रमशः]

बालानां कृते

## बालवीरः

सप्तदशे शतके इसवीये आंग्लानां फ्रांसिसानां च एकं घोरं सागर-युद्धम् अभवत्। तत्र सागरीय-युद्धस्य सेनापतिः नेल्सननामा महान् योद्धा आसीत्। ट्रफलगार-क्षेत्रे यदा उभयोः सागरीयनौदलयोः युद्धम् अभूत् तदा फ्रांसिसीपक्षे एकः युद्धनौकायाः कर्णधारः क्यासाबिएँका इति नामा वीरः आसीत्। स वीरः कर्णधारः दशवर्षीयं बालं स्ववीरपुत्रं संयोज्य अन्यत्र कार्यार्थं गतवान्। तस्य अनुपस्थितौ सा नौका शतघ्नीतः प्रेरितैः अग्नि-गोलकैः आहता आसीत्। अग्नि-बाणेन संदीप्ता सा युद्धनौका सर्वतः अग्निज्वालाभिः व्याप्ता। सर्वे एव नाविकाः स्वप्राणान् रक्षितुम् इतस्ततः धावमानाः आसन् किंतु एष वीरबालकः स्वनियोजितस्थानं नात्यजत्। एकाकी स पुनः पुनः व्याक्रोशत्—"हे पितः, अपि मे अत्रस्थं कार्यं समाप्तम्? अपि गच्छेयम् इतः अधुना?" परं न सः जानाति स्म यत् तस्य पिता एतच्छ्रोतुं नैव जीवितः आसीत्। अन्तं यावत् पितुः आदेशस्य अभावे बालः स्वस्थाने एव धैर्येण स्थितः। अग्निज्वालाः सर्वत्र प्रसृताः तं वीरम् आत्मसात् अकुर्वन्। तस्य भस्म वायुना इतस्ततः विकीर्णम्। तस्य कीर्तिम् इव दिक्षु प्रसारयितुम्।

---

## "यदि स्याद् अलम्"

डॉ. वे. राघवः (मद्रास)

पिपासति न मे मनोऽमृतमहस्सुधामाधुरीः
न वाञ्छति कुबेरभूकनकवालुकावेष्टनम्।
न नन्दनसुमाञ्चिता विबुधवाहिनीगाहिनीः
समुच्छ्वसिति चुम्बितुं त्रिदशवारवामेक्षणाः॥१॥

मितस्तदपि निष्ठितो विभव औदराग्न्याहुतेः
गृहं तनु सुवाटिकासुमचिताङ्कसंलालितम्।
कुटुम्बकमभीषणं सुभगडिम्भमुग्धस्मित-
प्रजृम्भिहृदयोल्लसत्प्रियतमाविभक्तश्रमम्॥२॥

विदूरहृतपामरोत्कलहकोपकोलाहलं
महेश्वरपदाम्बुजस्मरणपूतशान्तान्तरम्।
मनीषिवचनांशुमद्विकचशेमुषीपङ्कजं
मनः सरसगीतिकापुलकितं—यदि स्यादलम्॥३॥

प्रशाम्यदरुणे ज्वलद्दिवि निशामुखे वारिधेः
प्रतान्तमखिलं वपुर्मसृणवालुकासु क्षिपन्।
तरङ्गतुमुलध्वनिं सरलमारुतस्पन्दनं
तुषारजडसाहितीलयमवापयन् स्यामहो॥४॥

---

## श्रीचरितामृतम्

(साहित्य-परिचयः)

परमपूजनीयानां श्री. वासुदेवानंद-सरस्वतीनां (टेम्बे स्वामिनां) पट्टशिष्याः श्री. नृसिंहसरस्वती-दीक्षित स्वामिनः स्वीयगुरुवद् एव श्री. दत्तप्रभोः अवतारभूताः योगिराजाः इति सम्मान्यन्ते स्म। तेषां संस्कृत-पद्यमयं चरितं मराठी-अनुवादेन सह पण्डितप्रवरैः बापूशास्त्री-कोडणी-करैः प्रणीतं प्रकाशितचरम्। तत्र तेषां गुरुभक्तिः, लोकसेवा, श्रीरामो-पासना च यथार्थतया चित्रिता भवति। आचारशील-पूर्वजानां श्री. दत्तक्षेत्रे नृसिंहवाटिकायां यदृच्छया आगमनं, तपः-फल-रूपः च पुत्रलाभः, तत्पुत्रस्य शैशवं, उपनयनं सद्गुरुप्रसादः, अध्ययनं, संन्यासग्रहणं च यथाक्रमं वर्णितं वर्तते अस्मिन् चरिते सुबोधप्रायेण संस्कृतेन। मध्ये मध्ये च सुललिता काव्यरचना तथा पाण्डित्यप्रदर्शकानां शब्दानां प्रयोगाः मनोहारिताम् इव बोधबाधाम् अपि जनयन्ति। उदाहरणार्थं-श्लोकाः ३, ६१, ६३, १००, काव्यशक्तेः प्रतिभासकाः तथा "अर्कं" (९) "कोऽपि तद्वर्णने (?) शक्तः का कथान्यस्तु सर्वशः" (१९), 'पदं' शब्दः महत्तार्थे (२०), "नर्ययनं" (६४) सुबोधे बाधकाः। अथ च अपरः अपि दोषः क्वचित् क्वचित् लक्ष्यते यत् अपप्रयोगाः (अपाणि-नीयाः) "समानर्च्य" (८५) (समर्च्य), अप्रैषयत् (७२) (प्रैषयत्) सुरर्षी (१५) एतादृशाः न परिहृताः।

तथापि १०१ तमः श्लोकः सर्वथा स्तुत्यर्हं चरितप्रणेतारं विदधाति इति अभिनंदामः तम्। मराठी-अनुवादः अपि सविस्तरः (अतिविस्तरः वा) विद्यते तेन केषांचित् सुविधा जाता भवेत्।

एकं तु सविशेषं सूचनीयं, (न खलु दोषैकदृक्तया परं संस्कृत-प्रचारकामनया) यत् संस्कृत-श्लोकानां मुद्रणं सर्वथा निर्दोषं भवेत् एतादृशेषु पुस्तकेषु। अत्र प्रतिपृष्ठम् अनेके मुद्रणदोषाः अवलोक्यन्ते इति खेदकरम्-प्रमादपराः शब्दभङ्गाः, शब्दसंयोगाः च, अस्थाने ह्रस्वदीर्घत्वं, रेफाभावः, अवग्रहराहित्यम् इत्यादिकं सर्वं सावधानतया परिहार्यं सर्वथा येन संस्कृतमात्रपाठकाः अपि अनेन लाभान्विताः स्युः। नवशिक्षिताः च शुद्धं संस्कृतं जानीयुः।

प्रयत्नः अयं प्रकाशिकायाः (कु. मंगल नाईक, पुणे) अभिनंदनार्हः अनुकार्यः च तिष्ठति इति अभिप्रैमः। अस्य प्रस्तावनाकाराः प्रा. केरूर महोदयाः "अर्थ"-शास्त्रज्ञाः वस्तुतः परमार्थज्ञाः एव दृश्यन्ते। अमृत-बिन्दुपायकाः च श्रीमन्तः दत्तात्रेय धुंडिराज कवीश्वर-महाभागाः श्री. गुळवणी महाराजस्य आज्ञाकराः इति संतोषप्रदम्।

---

शिशुगीतम् ३

### मोदकं मे देहि

एहि एहि एहि। मोदकं मे देहि।
अस्तु रसो मधुरः। शोभनां स रुचिरः॥

के. रा. जो.

संस्कृत-भाषा-प्रचारि-सभायाः इदं साप्ताहिकं पत्रं श्री. पां. ना. बनहट्टी, महोदयेन नारायण-मुद्रणालयं नागपुरम् इत्यत्र मुद्रितं, 'संस्कृत-भवितव्यम्' कार्यालयः मोर-हिन्दी-भवनम्, नागपुरम् इत्यत्र प्रा. दि. वि. वराडपांडे-महोदयेन प्रकाशतां च नीतम्।

# ॥ दम्भ-विभूतिः ॥

डॉ. वे. राघवः

स्तब्धग्रीवः पुरोदृष्टिः कदाचित्केकरेक्षणः ।
प्रायशोऽप्येडमूकश्च विकटश्च पदक्रमे ॥ १ ॥

अयं स पीवरो दम्भः स्थूलः प्रकटनामकः ।
घण्टापथे विवल्गन्तं सर्वे जानन्त्यमुं स्फुटम् ॥ २ ॥

सूक्ष्मं तं दम्भमेवाहं बहुधेह विवर्त्तिनम् ।
अत्र प्रपञ्चयिष्यामि स्वान्यविज्ञानहेतवे ॥ ३ ।

शारीरवातकोपाविविकृत्या रहितस्स हि ।
ततः सूक्ष्मदृशामेव दृश्यो भवति यत्नतः ॥ ४ ॥

नास्तीह कोऽपि निर्दम्भः मात्राभेदोऽस्ति केवलम् ।
स्थूलदम्भं सूक्ष्मदम्भो निन्दन्व्यवहरत्यसौ ॥ ५ ॥

एको भावो महान्दम्भः पृथग् भावाननेकशः ।
व्याप्य भूतार्थतो नानानेपथ्यश्चेष्टते नृषु ॥ ६ ॥

दम्भावास्यमिदं सर्वं नेह नानास्ति किंचन ।
एकमेतत्परं तत्त्वं विद्वान् चरति सौख्यतः ॥ ७ ॥

यश्च कश्चिन्नृणां भावः या च काचिन्नृणां कृतिः ।
अन्तर्बहिश्च तत्सर्वं व्याप्य दम्भो विजेजिते ॥ ८ ॥

नीवारशूकवत् सर्वनराणां हृद्गुहाशयम् ।
अमुं दम्भं विजानाति यः कश्चन सुसूक्ष्मदृक् ॥ ९ ॥

नामरूपात्मकं यच्च भाववैविध्यमीक्ष्यते ।
तत्सर्वं नास्ति-मायैव दम्भे तत्त्वे विकल्प्यते ॥ १० ॥

एतदेवाद्वितीयं सत् दम्भाख्यं ब्रह्म वर्तते ।
भावप्रपञ्चस्सर्वोऽपि तत एव विवर्तते ॥ ११ ॥

यो वा को वास्तु भावस्स यो वा को वास्तु चाशयः ।
दम्भेन सर्व एवासावोतः प्रोतश्च दृश्यते ॥ १२ ॥

अत्रास्त्युपनिषद्विद्या कापि वाक्छलनामिका ।
दाम्भिका यत्प्रभावेन विजयन्तेऽत्र विश्वतः ॥ १३ ॥

प्रायेण तेषां वाक्येषु दृश्येते द्वे अलंकृती ।
पर्यायोक्तिरिति ख्याता व्याजोक्तिरिति च स्मृता ॥१४॥

कूटस्था दीक्षितास्ते नः पिता वाचस्पतिर्मम ।
पूर्व्येषु भक्तिरित्येवं कुलगर्वेण नटचते ॥ १५ ॥

वेदान्ता गहनास्तर्कः श्रमसाध्यश्चिरादिति ।
शास्त्रप्रशंसा विदुषां स्वशङ्खाध्मानपद्धतिः ॥ १६ ॥

अत्युत्कृष्टा कृतिस्तस्य किन्तु मत्कृतिमेव सः ।
पामरस्स्तौति पश्येति पर्यायोक्तिर्निजस्तुतेः ।। १७ ॥

अन्ये सूक्ष्माश्च पन्थानोऽप्यात्मश्लाघनसिद्धये ।
शतशस्सन्ति तेष्वेकः सूचितोऽत्र निदर्शनम् ॥ १८ ॥

स्वपुराणे निजाध्यायेष्वात्ममाहात्म्यखण्डतः ।
ऋजुनिर्लज्जमुखराः पठन्त्येकेचनानिशम् ॥ १९ ॥

याचको दानमाहात्म्यं स्तुवन्नायाति दायिनम् ।
श्लोकगृध्नुस्स दाता च स्तौति याचकवैदुषीम् ॥ २० ॥

आपत्कालाय पुत्राणां रक्षितव्यं धनं त्विति ।
अल्पव्ययमनीषाख्या वरीवर्ति कदर्यता ॥ २१ ॥

भुक्त्वा पर्युषितं केचित् देहदाढर्यंवदावदाः ।
यतन्ते स्वमहातुच्छकृपणत्वं निगूहितुम् ॥ २२ ॥

मुहुर्निजोदरं चापि शोषयन्तोऽत्र केचन ।
व्रतोपवासैस्तिथिभिः भक्तिमन्तो भवन्ति हि ॥ २३ ॥

तत्तद्वैषयिकं कामं दारिद्र्यान्नैव विन्दताम् ।
सन्त्यागतेभ्यो मित्रेभ्यः वैराग्यपरमाः कथाः ॥ २४ ॥

तन्द्रां वदन्ति नैस्पृह्यं जाडचं चापि तथा शमम् ।
अन्ये स्तुवन्ति चापल्यमुत्साहमिति केचन ॥ २५ ॥

कालः कष्टोऽयमल्पं वा कथंचिद्धनमर्जयेत् ।
इत्युद्योगितया कैश्चित् छाद्यते लुब्धतोल्बणा ॥ २६ ॥

ताडिताः केचिदबलाः अहिंसां वर्णयन्त्यहो ।
कौटिल्यं करणे केचित् लोकतन्त्राख्यया श्रिताः ॥ २७ ॥

आचारशोधनं व्याजः धर्मकोलाहलो बहिः ।
स्त्रीपुंसानां प्रमिलतां तत्त्वतो विटता फलम् ॥ २८ ॥

मैत्र्या परमया यत्तु प्रातिवेशिकवेश्मनि ।
चरन्ति केचित् तत् कश्चिदुपायः स्त्रीवशीकृतौ ॥२९॥

प्रातिवेशिकडिम्भानां लालनं गुणकीर्तनम् ।
तद्गृहे भक्ष्यपाकादि स्वादुतास्तवनं तथा ॥ ३० ॥

यतित्वं गृहवैद्यत्वं पाचकत्वं च भृत्यता ।
गानाध्यापकता किंच कुलश्रोत्रियतापि च ॥ ३१ ॥

इति दिङ्मात्रमुद्दिष्टं परिसंख्या न शक्यते ।
अनन्तो दृश्यते दम्भः कुलस्त्रीदूषणार्थकः ॥ ३२ ॥

गच्छन्ति वटवो नित्यं देवायतनमुत्सवे ।
उद्भूता भक्तिरेषां किं तत्र स्पृष्टक[1]माप्यते ॥ ३३ ॥

मैत्रीत्वव्याजसौहार्दमित्यादिच्छलमाश्रिताः ।
कलाशालासु बालाश्च बालिकाश्च विटन्ति हि ॥३४॥

असंबद्धं किमप्युक्त्वा पृष्टे केचिद्बुधोत्तमाः ।
कोऽप्याचार्यस्तथाप्याहेत्येवं तन्तुं वयन्ति हि ॥ ३५ ॥

असत्पक्षप्रतिष्ठाः केऽप्यात्मपक्षस्य तुच्छताम् ।
अभिप्रायस्वतन्त्रत्वनाम्ना धाष्टर्येण बिभ्रति ॥ ३६ ॥

अपार्थकमुदाहृत्य मौढ्यपारम्यमात्मनः ।
नाङ्गीकुर्वन्ति केचिच्च तत्त्वं बहुमुखं न्विति ॥३७॥

कालधर्मान्नवांस्तांस्तान् शुभानपि न जानते ।
तद्बुद्धिजाडचमास्तिक्यं प्रत्युत प्रवदन्ति हि ॥ ३८ ॥

स्वच्छपत्रे स्पष्टमुद्रे लब्धेऽपि ग्रन्थमुद्रणे ।
ताल एव पठामीति भक्ति तन्मनुते जनः ॥ ३९ ॥

कच्चरं वस्त्रमावास्य केचिद्वैदिकमानिनः ।
स्त्रीहेतोरुज्ज्वलं वेषं केचित् शौचं वदन्ति च ॥ ४० ॥

पाश्चात्याचारमोहिन्या कृष्टः केशावकर्त्तने ।
'स्नानसौकर्य' मस्त्यत्रेत्यम्बां वक्ति बटुः पटुः ॥ ४१ ॥

इति वादे च शीले च वाक्छलेनोपजीवति ।
बहुप्रकारो दम्भोऽसौ सत्यावरणमायिका ॥ ४२ ॥

---

१. जनसंमर्दे स्त्रीपुंसानां संपद्यमानं शरीरैकदेशसंपर्कः स्पृष्टकमिति कामसूत्रेषु उक्तम् ।

इतस्ततश्च यत्किंचित् उदाह्रियत केवलम् ।
दम्भब्रह्मणि निष्णातः नराञ्जानाति तत्त्वतः ॥ ४३ ॥

सञ्चारिभावा अन्ये हि जाता वीचिवदम्बुधौ ।
स्थायिनं दम्भमेवामी वर्धयन्त्युत्तरोत्तरम् ॥ ४४ ॥

अभ्युत्पन्नं जलं सर्वमब्धिमेव गतं, तथा ।
दम्भब्रह्ममहावाक्ये सर्वभावसमन्वयः ॥ ४५ ॥

सर्वे स्वोत्कर्षमिच्छन्ति यशोगुणधनादिषु ।
असत्स्वप्येषु तत्त्वेन वाञ्छन्त्याभासतोऽपि वा ॥ ४६ ॥

असच्च सद्वद् दम्भोऽसौ मायेव प्रतिभासयेत् ।
लोकसंवननाक्रान्तिक्रियाकार्यलमेव तत् ॥ ४७ ॥

संपाद्यः स्वप्रकाशोऽन्यैः पत्रिकासु सभासु च ।
भृत्यैः कृतज्ञैः क्रीतैर्वा नो चेद् हित्वा ह्रियं स्वयम् ॥ ४८ ॥

आत्मप्रशंसा राजाध्वा नास्त्येवात्मसमः सुहृत् ।
वदन्तु च हसन्त्वेके लभ्यं किं ह्रीमताधुना ॥ ४९ ॥

आत्मश्लाघादिरूपेऽसौ मन्दवेगेन चेष्टते ।
शाठ्यधौर्त्यादिनाम्ना तु परमोत्कटतां गतः ॥ ५० ॥

बालानन्यान् स्वयं बालः पीडयित्वा द्रुतं गतः ।
अन्यैस्ताडितमात्मानं मात्रेऽन्तः कथयत्यहो ॥ ५१ ॥

पुमांसो बहवो लोके तमेवोपायमाश्रिताः ।
अधरोत्तरयन्ति, स्वान् वदन्त्यन्यैर्विदूषितान् ॥ ५२ ॥

कोलाहलैश्चिरायास्मान् दूषयित्वा ततः क्षणात् ।
दैन्यं श्रिता नो निन्दन्ति परपक्षासहानिति ॥ ५३ ॥

अमी रुद्राक्षमार्जाराः नाटयन्तोऽतिदीनताम् ।
यद् धर्मं बोधयन्त्यन्यान् एतत्तु न सहे प्रभो ॥ ५४ ॥

अस्मत्क्षेमैकवार्ताभिः कारुण्यभरपेशलाः ।
लक्ष्मीरलुण्टन्नस्माकं श्वेतशासक[1]जम्बुकाः ॥ ५५ ॥

स्वानेव दैवतीकर्तुं प्रजोपास्यत्वलोलुपाः ।
प्रचारयन्ति नास्तिक्यदर्शनं[2] राष्ट्रनायकाः[3] ॥ ५६ ॥

लोकसेवाप्रवादेन तांस्तान् सङ्घान्[4] प्रविश्य च ।
आत्मप्राधान्यसंमानलुब्धाः केचिच्चरन्ति हि ॥ ५७ ॥

परम्परागतो धर्मकर्ता देवालयेष्विति ।
देवस्वभक्षणोपायः कुलवित्तस्य वृद्धये ॥ ५८ ॥

देवालयनिभाः संस्था अद्यत्वेऽपि भवन्ति हि ।
राष्ट्रसेवा लोकसेवा विद्यानारीसमुन्नतिः ॥ ५९ ॥

नेतृणां कीर्तिशेषाणां स्मृति[5]रित्यादिहेतवे ।
कियत्यो न भवन्त्यद्य संस्थाः सुनिधिभिः[6] सह ॥
निधिनिर्वाहिणां[7] कार्यदर्शिनां[8] भाग्यहेतवे ॥ ६० ॥

[1]पुरकोष्ठसभाः [2]राज्यशासकीयसभास्तथा ।
तासु श्रेष्ठा मन्त्रिसभा[3] सद्यस्सर्वार्थसिद्धये ॥ ६१ ॥

मन्त्रिमार्गो राजमार्गो नान्यः पन्था हि विद्यते ।
मन्त्रित्वमेव वाञ्छन्ति राजानोऽपि कुलागताः[4] ॥ ६२ ॥

बह्वचः कक्ष्या[5] राज्यवादे[6] या काचिन्मन्त्रितां वहेत् ।
अङ्गत्वं तासु सर्वासु फलोदर्कं भविष्यति ॥ ६३ ॥

अतोऽद्य धीमता पित्रा राज्यतन्त्रोपजीविना ।
एष्टव्या बहवः पुत्राः पुत्र्यस्सम्बन्धिनस्तथा ॥ ६४ ॥

तत्तत्कक्ष्याङ्गताहेतोः वियसिऽपि मन्त्रिणाम् ।
नोत्सीदेदन्वयो येन राज्याङ्गे स्वकुटुम्बिनाम् ॥ ६५ ॥

सङ्घकार्ये प्रवृत्तेषु नास्ति कोऽप्यच्छलः शुचिः ।
तारतम्यं तु भवति सामर्थ्यं चैव गोपने ॥ ६६ ॥

कर्मान्तशालाः[7] संस्थाप्य प्रायः परधनोच्चयैः ।
आस्त्रीशिशुकुटुम्बीयान् निर्वाहे नामतो लिखन् ॥ ६७ ॥

गृह-वाहन-भोगादि भुञ्जन् शालाव्ययच्छलात् ।
वञ्चयन् राज्यकोशं च यन्त्रेन्द्रः[8] सुखमेधते ॥ ६८ ॥

[9]अप्रौढदेशानर्थादिवदान्या ऋद्धनीवृतः[10] ।
आधमर्ण्यान्नियन्ति स्वच्छायानुकृतिदासताम्[11] ॥ ६९ ॥

आढ्यो ग्रामप्रधानोऽभूद् ऋणं दत्वा कृशान् जनान् ।
प्रजगल्भे वशे स्थाप्य नयोऽसौ हि सनातनः ॥ ७० ॥

विद्यारोग्यादिमिषतः क्रैस्तवीयप्रचारकाः ।
धर्मान् विशिष्टान् प्राचीनान् क्रमशो नाशयन्ति हि ॥ ७१ ॥

स्वयं यद्दोषतो दुष्टाः तद्दोषं प्रकटं नराः ।
निन्दन्तः स्वान् रिरक्षन्ति निजनिन्दनपूर्वतः ॥ ७२ ॥

तदयं च पुरोभागी कविः परमदाम्भिकः ।
इति निन्दति मां यस्स दम्भराज्येऽभिषिच्यते ॥ ७३ ॥

करामलकवत् तत्त्वमिति दर्शयतो जनान् ।
सहते नैव लोकोऽयं स्वाज्ञाने केवलं लुठन् ॥ ७४ ॥

अयं मा वद तद्दोषं तेन मा विवदस्व च ।
अन्योन्यश्लाघनैर्लोके विजयध्वं नरा बुधाः ॥ ७५ ॥

दम्भस्य स्फुरणं जानन् गुणान् को वा समीहताम् ।
सदसद्द्वन्द्व दूरेत्याः ते जयन्ति यमीश्वराः ॥ ७६ ॥

———

१. आंग्लाः राज्यकर्तारः (English rulers)
२. धर्मातीता नीतिः (Secularism and atheism)
३. देशनेतारः (National leaders)
४. मण्डलं, सभा, समितिः, संस्थाः (Associations, Societies, Organisations.)
५. मृतानां नेतृणां प्रधानपुरुषाणां वा स्मारकाणि (Memorials to dead leaders and V. I. P. s.)
६. अनल्पः वित्तसंग्रहः (Large funds.)
७. कोषाध्यक्षाः (Treasurers).
८. कार्यवाहाः (Secretaries).

१. नगरपालिकाः, मंडल परिषदः (City councils, District Boards)
२. प्रादेशिक्यः विधानसभाः (State Assemblies)
३. राज्य केन्द्रे वा मंत्रिमण्डलानि (Ministry; cabinet.)
४. संस्थानाधिपाः (Heriditary Maharajahs)
५. पक्षाः (Parties)
६. राजनीति (Politics.)
७. उत्पादके-औद्योगिक-संस्थाः (Factories, Industrial Establishments.)
८. धनपतिः, प्रबन्धकः वा (Industrial magnate, Factery head.)
९. अविकसिताः देशाः। (अप्रगतिकाः) (Undeveloped Countries).
१०. समृद्धाः प्रगतिशीलाः चदेशाः। (Affluent Countries)
११. जीवने तेषाम् अन्धानुकरणम् एव दास्यम्। (Slavery through imitative life.)

Dr.V.Raghavan,
Professor of Sanskrit

7, Srikrishnapuram St.,
Royapettah: : Madras.14.
Dt.19-12-'68.

1

Dear Dr. Satyavrat,

I sent you soon after my return to Madras a copy of my play Prataparudravijaya or Vidyanathavidambana. I am sending you today by the insured post note-books containing Sanskrit cantos of my Maha-Kavya on Muthuswami Dikshitar. I have just received your letter of 11-12-'68 and I am glad to know that the Journal devoted to Translation is interested in publishing something about my translation work.

My career as a writer may be said to have started actually with Translation and the first three publications which came out quickly, year after year, 1934-36, are the English translations of condensed versions of the Mahabharata, the Bhagavata and a collection of Sanskrit Prayers, Praises and Psalsm, all these three having been published by G.A.Natesan & Co., Madras. The second sustained translation work of mine related to the English short stories of the late Manjeri S.Eswaran, which I did into Tamil. Manjeri S.Eswaran who was for some time Secretary of the National Book Trust, was a wellknown writer of English poetry and short stories and we were class-mates in the College and I regularly translated his English short stories into Tamil and published them in xxx various Tamil journals. Some of them were also later collected into volumes of x Manjeri Eswaran's short stories in Tamil version. During x this time, I also translated and published in the Tamil Journals, Kalaimal, Silpasri etc. English articles on various subjects bearing on Indian Painting, Indian Art etc. Among the miscellaneous Tamil translations which I made in these journals were from Sanskrit Subhashitas, stotras, verses of Sankara etc. Of the great Tamil National poet Subrahmanya Bharathi, I made Sanskrit translations, one of which might be mentioned, a humourous skit called 'Horses Horn' (Asva Srnga). This Sanskrit version was published a few years ago in Bharat Vani, Poona. I made also several Sanskrit translations from English poetry, from Grey and Keats (published in the Samskrita Pratibha, as you know), as also stray verses and prose passages from a variety of English writers also published in the Pratibha under the title

Anuvadaprakasa. My translation from Tolstoy (Andapramanakam Dhanyam) published in Pratibha is included by you in one of your Sanskrit collections. The most important translation work which did is The Indian Heritage, an anthology in English of selections from Sanskrit literature, Vedas, Upanishads, Epics etc., sponsored by the Unesco under the project of Representative classics of Nations. This was published with a foreword by the late Dr. Rajendra Prasad, by the Indian Institute of World Culture, Bangalore, on the occasion of the first meeting of the Unesco in Vignyan Bhavan, Delhi, 1955. This has gone into two editions. Among English to Sanskrit translations may also be mentioned, my Bharatam Advyatanam, Svastanam which is an English translation of Jawaharlal Nehru's Azad Memorial lectures and was commissioned by the National Book Trust; copies of this are now with the Central Sanskrit Board. Also several works of Sanskrit Hymnology have been brought out by me with English and Tamil translations (Kamakoti Koshasthanam, B.G.Paul & Co., Madras) In my Patel Memorial Lectures, The Great Integrators: Saint-Singers of India, the later part called the Anthology has many English translations of mine from Tamil hymnists and from Saint Tyagaraja. The Columbia University, New York, have brought a book called Sources of Indian Tradition in which I about 100pages represents my contribution which includes English translations from Source-books in Sanskrit bearing on the fundamental conceptions in Sanskr of Hindi Thought and Philosophy. This book received the first Watumul Award in U.S. for publications on India.

For the Southern Languages Book Trust, Madras, I have brought out in Tamil a translation of selections from Somadeva's Kathasaritsagara. I have been translating Kathasaratisagara continuously and this part of my major translation work which would give the whole Kathasaritsagara in Tamil. Several portions of this have appeared serially in Tamil periodicals. Tus my translation work has been from Sanskrit to English and Tamil, from Tamil and English to Sanskrit, and from English to Tamil.

Students of mine have translated some of my contributions in English or Sanskrit into other South Indian Languages as well as in Hindi.

Yours sincerely,

V Raghavan

(Dr.V.Raghavan)

To
Dr.Satyavrat,
Roop Nagar,
Delhi.

# ॥ दम्भ--विभूतिः ॥

डॉ. वे. राघवः

स्तब्धग्रीवः पुरोदृष्टिः कदाचित्केकरेक्षणः ।
प्रायशोऽप्येडमूकश्च विकटश्च पदक्रमे ॥ १ ॥

अयं स पीवरो दम्भः स्थूलः प्रकटनामकः ।
घण्टापथे विवल्गन्तं सर्वे जानन्त्यमुं स्फुटम् ॥ २ ॥

सूक्ष्मं तं दम्भमेवाहं बहुधेह विवर्त्तिनम् ।
अत्र प्रपञ्चयिष्यामि स्वान्यविज्ञानहेतवे ॥ ३ ।

शारीरवातकोपार्तिविकृत्या रहितस्स हि ।
ततः सूक्ष्मदृशामेव दृश्यो भवति यत्नतः ॥ ४ ॥

नास्तीह कोऽपि निर्दम्भः मात्राभेदोऽस्ति केवलम् ।
स्थूलदम्भं सूक्ष्मदम्भो निन्दन्व्यवहरत्यसौ ॥ ५ ॥

एको भावो महान्दम्भः पृथग् भावाननेकशः ।
व्याप्य भूतार्थतो नानानेपथ्यश्चेष्टते नृषु ॥ ६ ॥

दम्भावास्यमिदं सर्वं नेह नानास्ति किंचन ।
एकमेतत्परं तत्त्वं विद्वान् चरति सौख्यतः ॥ ७ ॥

यश्च कश्चिन्नृणां भावः या च काचिन्नृणां कृतिः ।
अन्तर्बहिश्च तत्सर्वं व्याप्य दम्भो विजेजिते ॥ ८ ॥

नीवारशूकवत् सर्वनराणां हृद्गुहाशयम् ।
अमुं दम्भं विजानाति यः कश्चन सुसूक्ष्मदृक् ॥ ९ ॥

नामरूपात्मकं यच्च भाववैविध्यमीक्ष्यते ।
तत्सर्वं नास्ति-मायैव दम्भे तत्त्वे विकल्प्यते ॥ १० ॥

एतदेवाद्वितीयं सत् दम्भाख्यं ब्रह्म वर्तते ।
भावप्रपञ्चस्सर्वोऽपि तत एव विवर्तते ॥ ११ ॥

यो वा को वास्तु भावस्स यो वा को वास्तु चाशयः ।
दम्भेन सर्वं एवासावोतः प्रोतश्च दृश्यते ॥ १२ ॥

अत्रास्त्युपनिषद्विद्या कापि वाक्छलनामिका ।
दाम्भिका यत्प्रभावेन विजयन्तेऽत्र विश्वतः ॥ १३ ॥

प्रायेण तेषां वाक्येषु दृश्येते द्वे अलंकृती ।
पर्यायोक्तिरिति ख्याता व्याजोक्तिरिति च स्मृता ॥१४॥

कूटस्था दीक्षितास्ते नः पिता वाचस्पतिर्मम ।
पूर्व्येषु भक्तिरित्येवं कुलगर्वेण नट्यते ॥ १५ ॥

वेदान्ता गहनास्तर्कः श्रमसाध्यश्चिरादिति ।
शास्त्रप्रशंसा विदुषां स्वशङ्खाध्मानपद्धतिः ॥ १६ ॥

अत्युत्कृष्टा कृतिस्तस्य किन्तु मत्कृतिमेव सः ।
पामरस्स्तौति पश्येति पर्यायोक्तिर्निजस्तुतेः ॥ १७ ॥

अन्ये सूक्ष्माश्च पन्थानोऽप्यत्मश्लाघनसिद्धये ।
शतशस्सन्ति तेष्वेकः सूचितोऽत्र निदर्शनम् ॥ १८ ॥

स्वपुराणे निजाध्यायेष्वात्ममाहात्म्यखण्डतः ।
ऋजुनिर्लज्जमुखराः पठन्त्येकेचनानिशम् ॥ १९ ॥

याचको दानमाहात्म्यं स्तुवन्नायाति दायिनम् ।
श्लोकगृध्नुस्स दाता च स्तौति याचकवैदुषीम् ॥ २० ॥

आपत्कालाय पुत्राणां रक्षितव्यं धनं त्विति ।
अल्पव्ययमनीषाख्या वरीवर्ति कदर्यता ॥ २१ ॥

भुक्त्वा पर्युषितं केचित् देहदार्ढ्यवदावदाः ।
यतन्ते स्वमहातुच्छकृपणत्वं निगूहितुम् ॥ २२ ॥

मुहुर्निजोदरं चापि शोषयन्तोऽत्र केचन ।
व्रतोपवासैस्तिथिभिः भक्तिमन्तो भवन्ति हि ॥ २३ ॥

तत्तद्वैषयिकं कामं दारिद्र्यान्नैव विन्दताम् ।
सन्त्यागतेभ्यो मित्रेभ्यः वैराग्यपरमाः कथाः ॥ २४ ॥

तन्द्रां वदन्ति नैस्पृह्यं जाड्यं चापि तथा शमम् ।
अन्ये स्तुवन्ति चापल्यमुत्साहमिति केचन ॥ २५ ॥

कालः कष्टोऽयमल्पं वा कथंचिद्धनमर्जयेत् ।
इत्युद्योगितया कैश्चित् छाद्यते लुब्धतोल्बणा ॥ २६ ॥

ताडिताः केचिदबलाः अहिंसां वर्णयन्त्यहो ।
कौटिल्यं करणे केचित् लोकतन्त्राख्यया श्रिताः ॥ २७ ॥

आचारशोधनं व्याजः धर्मकोलाहलो बहिः ।
स्त्रीपुंसानां प्रमिलतां तत्त्वतो विटता फलम् ॥ २८ ॥

मैत्र्या परमया यत्तु प्रातिवेशिकवेश्मनि ।
चरन्ति केचित् तत् कश्चिदुपायः स्त्रीवशीकृतौ ॥२९॥

प्रातिवेशिकडिम्भानां लालनं गुणकीर्तनम् ।
तद्गृहे भक्ष्यपाकादि स्वादुतास्तवनं तथा ॥ ३० ॥

यतित्वं गृहवैद्यत्वं पाचकत्वं च भृत्यता ।
गानाध्यापकता किंच कुलश्रोत्रियतापि च ॥ ३१ ॥

इति दिङ्मात्रमुद्दिष्टं परिसंख्या न शक्यते ।
अनन्तो दृश्यते दम्भः कुलस्त्रीदूषणार्थकः ॥ ३२ ॥

गच्छन्ति वटवो नित्यं देवायतनमुत्सवे ।
उद्भूता भक्तिरेषां किं तत्र स्पृष्टक[1]माप्यते ॥ ३३ ॥

मैत्रीतव्याजसौहार्दमित्यादिच्छलमाश्रिताः ।
कलाशालासु बालाश्च बालिकाश्च विटन्ति हि ॥३४॥

असंबद्धं किमप्युक्त्वा पृष्टे केचिद्बुधोत्तमाः ।
कोऽप्याचार्यस्तथाप्याहेत्येवं तन्तुं वयन्ति हि ॥ ३५ ॥

असत्पक्षप्रतिष्ठाः केऽप्यात्मपक्षस्य तुच्छताम् ।
अभिप्रायस्वतन्त्रत्वनाम्ना धाष्टर्येण बिभ्रति ॥ ३६ ॥

अपार्थकमुदाहृत्य मौढ्यपारम्यमात्मनः ।
नाङ्गीकुर्वन्ति केचिच्च तत्त्वं बहुमुखं न्विति ॥३७ ॥

कालधर्मान्नवांस्तांस्तान् शुभानपि न जानते ।
तद्बुद्धिजाड्यमास्तिक्यं प्रत्युत प्रवदन्ति हि ॥ ३८ ॥

स्वच्छपत्रे स्पष्टमुद्रे लब्धेऽपि ग्रन्थमुद्रणे ।
ताल एव पठामीति भक्ति तन्मनुते जनः ॥ ३९ ॥

कच्चरं वस्त्रमावास्य केचिद्वैदिकमानिनः ।
स्त्रीहेतोरुज्ज्वलं वेषं केचित् शौचं वदन्ति च ॥ ४० ॥

पाश्चात्याचारमोहिन्या कृष्टः केशावकर्त्तने ।
'स्नानसौकर्य' मस्त्यत्रेत्यम्बां वक्ति बटुः पटुः ॥ ४१ ॥

इति वादे च शीले च वाक्छलेनोपजीवति ।
बहुप्रकारो दम्भोऽसौ सत्यावरणमायिका ॥ ४२ ॥

१. जनसंमर्दे स्त्रीपुंसानां संपद्यमानं शरीरैकदेशसंपर्कः स्पृष्टकमिति कामसूत्रेषू उक्तम् ।

इतस्ततश्च यत्किंचित् उदाह्रियत केवलम् ।
दम्भब्रह्माणि निष्णातः नराञ्जानाति तत्त्वतः ॥ ४३ ॥

सञ्चारिभावा अन्ये हि जाता वीचिवदम्बुधौ ।
स्थायिनं दम्भमेवामी वर्धयन्त्युत्तरोत्तरम् ॥ ४४ ॥

अब्ध्युत्पन्नं जलं सर्वमब्धिमेव गतं, तथा ।
दम्भब्रह्ममहावाक्ये सर्वभावसमन्वयः ॥ ४५ ॥

सर्वे स्वोत्कर्षमिच्छन्ति यशोगुणधनादिषु ।
असत्स्वप्येषु तत्त्वेन वाञ्छन्त्याभासतोऽपि वा ॥ ४६ ॥

असच्च सद्वद् दम्भोऽसौ मायेव प्रतिभासयेत् ।
लोकसंवननाक्रान्तिक्रियाकार्यलमेव तत् ॥ ४७ ॥

संपाद्यः स्वप्रकाशोऽन्यैः पत्रिकासु सभासु च ।
भृत्यैः कृतज्ञैः कीर्तैर्वा नो चेद् हित्वा ह्रियं स्वयम् ॥ ४८ ॥

आत्मप्रशंसा राजाध्वा नास्त्येवात्मसमः सुहृत् ।
वदन्तु च हसन्त्वेके लभ्यं किं ह्रीमताधुना ॥ ४९ ॥

आत्मश्लाघादिरूपेऽसौ मन्दवेगेन चेष्टते ।
शाठ्यधौर्त्यादिनाम्ना तु परमोत्कटतां गतः ॥ ५० ॥

बालानन्यान् स्वयं बालः पीडयित्वा द्रुतं गतः ।
अन्यैस्ताडितमात्मानं मात्रेऽन्तः कथयत्यहो ॥ ५१ ॥

पुमांसो बहवो लोके तमेवोपायमाश्रिताः ।
अधरोत्तरयन्ति, स्वान् वदन्त्यन्यैर्विदूषितान् ॥ ५२ ॥

कोलाहलैश्चिरायास्मान् दूषयित्वा ततः क्षणात् ।
दैन्यं श्रिता नो निन्दन्ति परपक्षासहानिति ॥ ५३ ॥

अमी रुद्राक्षमार्जाराः नाटयन्तोऽतिदीनताम् ।
यद् धर्मं बोधयन्त्यन्यान् एतत्तु न सहे प्रभो ॥ ५४ ॥

अस्मत्क्षेमैकवार्ताभिः कारुण्यभरपेशलाः ।
लक्ष्मीरलुण्ठन्नस्माकं श्वेतशासक[1]जम्बुकाः ॥ ५५ ॥

स्वानेव दैवतीकर्तुं प्रजोपास्यत्वलोलुपाः ।
प्रचारयन्ति नास्तिक्यदर्शनं[2] राष्ट्रनायकाः[3] ॥ ५६ ॥

लोकसेवाप्रवादेन तांस्तान् सङ्घान्[4] प्रविश्य च ।
आत्मप्राधान्यसंमानलुब्धाः केचिच्चरन्ति हि ॥ ५७ ॥

परम्परागतो धर्मकर्ता देवालयेष्विति ।
देवस्वभक्षणोपायः कुलवित्तस्य वृद्धये ॥ ५८ ॥

देवालयनिभाः संस्था अद्यत्वेऽपि भवन्ति हि ।
राष्ट्रसेवा लोकसेवा विद्यानारीसमुन्नतिः ॥ ५९ ॥

नेतॄणां कीर्तिशेषाणां स्मृति[5]रित्यादिहेतवे ।
कियन्त्यो न भवन्त्यद्य संस्थाः सुनिधिभिः[6] सह ॥
निधिनिर्वाहिणां[7] कार्यदर्शिनां[8] भाग्यहेतवे ॥ ६० ॥

१. आंग्लाः राज्यकर्तारः (English rulers)
२. धर्मातीता नीतिः (Secularism and atheism)
३. देशनेतारः (National leaders)
४. मण्डलं, सभा, समितिः, संस्थाः (Associations, Societies, Organisations.)
५. मृतानां नेतॄणां प्रधानपुरुषाणां वा स्मारकाणि (Memorials to dead leaders and V. I. P. s.)
६. अनल्पः वित्तसंग्रहः (Large funds.)
७. कोषाध्यक्षाः (Treasurers).
८. कार्यवाहाः (Secretaries).

[1]पुरकोष्ठसभाः [2]राज्यशासकीयसभास्तथा ।
तासु श्रेष्ठा मन्त्रिसभा[3] सद्यस्सर्वार्थसिद्धये ॥ ६१ ॥

मन्त्रिमार्गो राजमार्गः नान्यः पन्था हि विद्यते ।
मन्त्रित्वमेव वाञ्छन्ति राजानोऽपि कुलागताः[4] ॥ ६२ ॥

बह्वचः कक्ष्या[5] राज्यवादे[6] या काचिन्मन्त्रितां वहेत् ।
अङ्गत्वं तासु सर्वासु फलोदर्कं भविष्यति ॥ ६३ ॥

अतोऽद्य धीमता पित्रा राज्यतन्त्रोपजीविना ।
एष्टव्या बहवः पुत्राः पुत्र्यस्सम्बन्धिनस्तथा ॥ ६४ ॥

तत्तत्कक्ष्याङ्गताहेतोः विपर्यासेऽपि मन्त्रिणाम् ।
नोत्सीदेदन्वयो येन राज्याङ्गे स्वकुटुम्बिनाम् ॥ ६५ ॥

सङ्घकार्ये प्रवृत्तेषु नास्ति कोऽप्यच्छलः शुचिः ।
तारतम्यं तु भवति सामर्थ्ये चैव गोपने ॥ ६६ ॥

कर्मान्तशालाः[7] संस्थाप्य प्रायः परधनोच्चयैः ।
आस्त्रीशिशुकुटुम्बीयान् निर्वाहे नामतो लिखन् ॥ ६७ ॥

गृह–वाहन–भोगादि भुञ्जन् शालाव्ययच्छलात् ।
वञ्चयन् राज्यकोशं च यन्त्रेन्द्रः[8] सुखमेधते ॥ ६८ ॥

[9]अप्रौढदेशानर्थादिवदान्या ऋद्धनीवृतः[10] ।
आधमर्ण्यान्नियन्ति स्वच्छायानुकृतिदासताम्[11] ॥ ६९ ॥

आढ्यो ग्रामप्रधानोऽभूद् ऋणं दत्वा कृशान् जनान् ।
प्रजगलभे वशे स्थाप्य नयोऽसौ हि सनातनः ॥ ७० ॥

विद्यारोग्यादिमिषतः कैस्तवीयप्रचारकाः ।
धर्मान् विशिष्टान् प्राचीनान् क्रमशो नाशयन्ति हि ॥ ७१ ॥

स्वयं यद्दोषतो दुष्टाः तद्दोषं प्रकटं नराः ।
निन्दन्तः स्वान् रिरक्षन्ति निजनिन्दनपूर्वतः ॥ ७२ ॥

तदयं च पुरोभागी कविः परमदाम्भिकः ।
इति निन्दति मां यस्स दम्भराज्येऽभिषिच्यते ॥ ७३ ॥

करामलकवत् तत्त्वमिति दर्शयतो जनान् ।
सहते नैव लोकोऽयं स्वाज्ञाने केवलं लुठन् ॥ ७४ ॥

अयं मा वद तद्दोषं तेन मा विवदस्व च ।
अन्योन्यश्लाघनैर्लोके विजयध्वं नरा बुधाः ॥ ७५ ॥

दम्भस्य स्फुरणं जानन् गुणान् को वा समीहताम् ।
सदसद्द्वन्द्व दूरेत्याः ते जयन्ति यमीश्वराः ॥ ७६ ॥

———

१. नगरपालिकाः, मंडल परिषदः (City councils, District Boards)
२. प्रादेशिक्यः विधानसभाः (State Assemblies)
३. राज्य केन्द्रे वा मंत्रिमण्डलानि (Ministry; cabinet.)
४. संस्थानाधिपाः (Heriditary Maharajahs)
५. पक्षाः (Parties)
६. राजनीति (Politics.)
७. उत्पादके–औद्योगिक–संस्थाः (Factories, Industrial Establishments.)
८. धनपतिः, प्रबन्धकः वा (Industrial magnate, Factory head.)
९. अविकसिताः देशाः । (अप्रगतिकाः) (Undeveloped Countries).
१०. समृद्धाः प्रगतिशीलाः देशाः । (Affluent Countries)
११. जीवने तेषाम् अन्धानुकरणम् एव दास्यम् । (Slavery through imitative life.)

# " विश्व-संस्कृत-महासम्मेलनं "
( काशी नगरे )

म. म. पं. राज, पं. श्यामकुमार आचार्य, ऐडवोकेट,
मंत्री, भारतीय विद्याप्रचार समितिः (राज्यपंजीकृता)

सादर सूचयामि सर्वान् संस्कृत-पंडितान् संस्कृत-हितैषिणः, यत् अस्य वर्षस्य कदाचित् अन्तिमे मासे एकं वृहत् " विश्व-संस्कृत-महासम्मेलनं " भारतीय-विद्या-प्रचार-समितेः तत्वावधाने काशीनगरे (वाराणसी उ. प्र.) भवेत्। इदं महासम्मेलनं कदाचित् ४ दिनानि यावत् अधिकं वा प्रचलेत् यथावसरं। अस्मिन् विषये तिथि-निश्चयः शीघ्रं करिष्यते समितेः कार्यकारिसभया, यस्याः अधिवेशनं ४ अक्टूबर १९७० तिथौ भवेत्, रविवासरे ३-वादने सायंकाले। तदा समितेः 'निर्वाचनं' अपि भवेत् 'साधारण सभायां'। अस्मिन् विषये सर्वा सूचना दास्यते शीघ्रं सदस्येभ्यः। इदं तु ज्ञात-वृत्तं एव, यत् षड् 'अखिल-भारतीय-संस्कृत-महासम्मेलनानि' जातानि गतेषु वर्षेषु समितेः तत्वावधाने, मम मन्त्रित्वकाले। कदाचित् कयाऽपि अन्यया संस्कृत-संस्थया एतादृशानि सम्मेलनानि नहि कृतानि। अन्तिमे महासम्मेलने 'संस्कृतं' राष्ट्रभाषा उद्घोषिता भारतस्य, यथा तत् आसीत् प्राचीन-भारते। तदा संस्कृतं अस्माकं भारतीयानां 'मातृ-राष्ट्र-राज-शिक्षाभाषा' आसीत्, विश्वे च 'विश्व भाषा' इत्यस्ति 'निर्विवादं ऐतिहासिकं तथ्यं।' भारतीया भाषा 'संस्कृतं' इदानीं अपि 'भारती', यतः सर्वस्मिन् भारते संस्कृत-विद्वांसः मिलन्ति। कोऽपि प्रान्तः भारतभागः वा नास्ति, यत्र 'संस्कृतज्ञाः' न मिलेयुः। संस्कृतसाहित्यं सर्वलोक-परलोक विद्या-व्यापि। इदं अपि एकं अतर्क्यं प्रमाणं, यत् संस्कृतं पुरा जनभाषा आसीत्। जनभाषा 'मातृभाषा' भवति प्रायशः लोके।

### समितेः उद्देश्यं

समितेः उद्देश्यं प्रायः ४० वर्षेभ्यः इदं अस्ति, यत् प्रथमं संस्कृतं 'जनभाषा' भवेत् पूर्ववत्, तदनन्तरं 'मातृभाषा' यथा पुराकाले आसीत्। यदि सर्वेषां संस्कृतज्ञानां संस्कृतं 'दैनिक-व्यवहार भाषा' भवेत्। तदा किञ्चित्कालानन्तरं 'जनभाषा' स्यात् इति निश्चप्रचं।

### परन्तु 'कीदृशं संस्कृतं' जनभाषा स्यात्

अयं प्रश्नः गम्भीरतया विचारितः समित्या, यत् 'कीदृशं संस्कृतं' भवेत् येन सरलतया 'जनभाषा' स्यात्। इदं विचारितं समित्या, यत् 'सर्वासां संसारस्य जीवित-भाषाणां' इयं 'लेखन-भाषण-परिपाटी' यत् यथासाध्यं 'वाक्यानां पदानि पृथक् विद्यन्ते', येन वक्तुः लेखकस्य वा 'अभिप्रायः' सहजतया सुविदितः स्यात्। परस्परं भाषायाः प्रयोगः 'सुबोधाय' भवति, न तु 'दुर्बोधाय', यतः दुर्बोधाय भवेत् चेत्, तदा मौनं वरं। याः भाषाः, महोन्नताः अपि, 'दैनिक-व्यवहारे' नहि प्रयुज्यन्ते, ताः 'ग्रन्थगताः मृताः वा' इति कथ्यन्ते, यतः 'भाष्यते जनैः इति भाषा भवति।' दौर्भाग्यवशात् संस्कृतं अद्य नहि प्रयुज्यते दैनिक-व्यवहारेषु कुत्र अपि भारतवर्षे, तस्य उद्गमस्थाने। यदि 'संस्कृतं' प्रयुक्तं स्यात् न्यूनातिन्यूनं संस्कृत-पंडितैः, तदा तेषां कृते तु संस्कृतं 'मृतं' न भवेत्। भाषणेन, व्यवहारेण 'सरलत्वं, सुबोधत्वं तु स्वत एव आगच्छेत् संस्कृते' अत्र संदेहलेशोऽपि नास्ति। तदा संस्कृतज्ञैः स्व-स्व-क्षेत्रीयभाषाणां व्यवहार-त्यागः आवश्यकः भवेत्, यद्यपि ताः क्षेत्रीयभाषाः संस्कृतस्य एव 'भ्रंशाः' सन्ति। यदि शनैः शनैः इमाः क्षेत्रीय-भाषाः 'संस्कृत-भ्रंशाः' शुद्धसंस्कृतरूपे नीताः स्युः संस्कृतज्ञैः, तदा अयं अपि एकः उपायः, येन संस्कृतं भूयोऽपि भाषणभाषा जनभाषा स्यात् भारतस्य। मया पुस्तकं-एकं रचितं अस्मिन् विषये 'कीदृशं संस्कृतम्?' तथा 'मूलं संस्कृतम्', यत् केन मार्गेण संस्कृतं 'आधुनिकं, सरलं, सुबोधं च' भवितुं अर्हति। सौभाग्यं, यत् मम प्रदर्शितः सुधारमार्गः, व्याकरण-सम्मतः, प्रायः स्वीकृतः विद्वद्भिः, यतः मम 'मूलं संस्कृतम्' एमए कक्षासु पाठ्यते आगरा-विश्वविद्यालये, तथा अन्यत्र अपि। मया तु अन्तिमरूपेण कथ्यते, यत् वाक्यपदेषु यथासाध्यं सन्धिः न कृतः स्यात् तदा अद्य संस्कृतं राष्ट्रभाषा भवितुं अर्हति भारतस्य।' 'मः अनुस्वारः' इति सूत्रबलात् हलन्त 'म्' दातुं शक्यते अचि परे सति, न मम कोऽपि विरोधः।

### शासनं विरोधि संस्कृतस्य

दौर्भाग्यवशात् केन्द्रिय-प्रदेश-शासनानि संस्कृत-विरुद्धानि। यतः केन्द्रशासनस्य 'त्रिभाषा-सूत्रे' संस्कृत-स्थानं कुत्र अपि भवितुं नहि अर्हति। विदेशेषु यत् 'स्थानं संस्कृतस्य' तत् भारते नास्ति। परन्तु 'संस्कृत-वेद-मार्गेण' एव भारत-विश्व-उन्नतिः सम्भवा, इति नः विश्वासः, अतः आवश्यकं 'विश्व-संस्कृत-महासम्मेलनं' काशी नगरे, कथित-संस्कृत-केन्द्रे।' तत्र इमे सर्वे प्रश्नाः विचारपथे नीताः स्युः। इत्यलं विस्तरेण।

---

# कोकिलनिर्वेदः

डॉ. वे. राघवः (मद्रास)

सखा— कोकिल, कोकिल, कोमलगलयुत !
कोकिल, कोकिल, मञ्जुलपञ्चम ! ।
कोकिल, माधवचूतविहार
कोकिल, मन्मथविजयसुमागध ।
कोकिलपोतक, कुत्र गलस्तव ?
श्राम्यसि ताम्यसि सीदसि किं भोः ॥

कोकिलः— हृदयालुसन्मित्र मात्रा वियुक्तः
ईर्ष्यालुकरटौघरटनैर्म्रियेऽत्र ।

सखा— कोकिल, धारय समयं क्षमया
रोहति पत्रं स्वैरं यास्यसि ।

कोकिलः— नायं वसन्तो न च वा रसाले
अङ्कूरितं मे किसलं क्व यानि ।

सखा— कोकिल, नूनं चक्रगति त्वं
माधवभाग्यं नचिरात्प्राप्स्यसि ।
एते वयमिह भव्याशंसाः
तावकपञ्चमगीत्युत्कण्ठाः ॥

कोकिलः— अङ्ग त्वदाभाः विरलाः प्रपञ्चे
सत्स्यामि चात्रैव कान्तारकोणे ।
को वाऽत्र शुश्रूषुरनुभावशीलः
को वा रसं वेत्ति गास्यामि कस्मै ॥
माहात्म्यगर्वान्धमृगराजसदसि
प्रविविक्षया किं ? विरसाः शिवास्ते ।
करटावलिर्हन्त रटनैरसूय-
त्यपि हन्त विपिनं जडमेव सकलम् ॥
अजवच्च यदि केऽपि शृणुयुः किमेतैः
खरकर्णगानेन गल एव शुष्कः ।
स्वयमेव गीतेऽपि केषांचनात्र
श्रवणं च कियते न भाराय भवति ॥
अयि सौम्य ! न हि जन्म गुण्यं सुखाय
बलवान् महेशोऽपि लोको बलीयान् ।
अजनिर्वरिष्ठा यदि सा न, जन्तोः
शिशुभाव एवेह मरणं वरीयः ॥

**बालानां कृते**

## ब्रह्मचर्य-निष्ठा

पुरा किल इंग्लंडदेशे 'कॅव्हेंडिश' नामा पुरुषो बभूव। तस्य शैशवे एव तस्य माता दिवं जगाम। तदाऽरभ्य सः पित्रा एव वर्धितः। सोऽपि एकाकी एव क्रीडनकैस्सह रेमे। बाल्येऽपि अन्यबालकानां इव मित्रैस्सह क्रीडने वा संपर्केऽपि तस्य रुचिः न दृष्टा। शालायां सः अनासक्तः इतरैः असंपृक्तः तस्थौ।

यौवनं प्राप्यापि हि सः स्त्रीभिः सह भाषणमपि न चक्रे। महाविद्यालये विज्ञानम् अधीत्य सः यूरोप-पर्यटनं चकार। तदा सः अति-स्नातक-(द्रष्टा) पदवीं लेभे। पुरा काले विद्यापीठीय-परीक्षोत्तीर्ण-छात्रेभ्यो देशपर्यटनादूर्ध्वमेव पदव्यः देयाः तस्थुः। अस्मद्देशेऽपि पुरा देशपर्यटनं, पंडितमैत्री, सभासंचारः एतत्त्रयं स्नातकानां शिक्षणस्य-पूर्णतया द्योतकम् आवश्यकम् अङ्गम् आस।

तस्मिन्नेव काले तस्य अपुत्रः धनाढ्यः पितृव्यः स्वकीयाम् एकलक्ष-पौंडमितां संपदं मृत्युपत्रेण तस्मै समर्प्य पंचत्वं जगाम। तां लब्ध्वा तु सः अतीव अंतर्मुखो बभूव। सः स्वकीय-कार्यार्थे केवलं सेवकद्वयं ररक्ष। ताभ्यां सहापि सः केवलं कागजे लिखित्वा व्यवहारं चकार। परं तस्य विज्ञानाध्ययने रुचिः आस। सर्वकालं स्वकीये कक्षे वैज्ञानिक-ग्रंथानां पठने वा वैज्ञानिक-समस्यानां चिंतने सः अनयत् कालम्। यदाकदाचित् वैज्ञानिकानां सभायां गत्वा स्वचिंतनोपलब्ध-सत्यानि प्राकाशयत। तत्रापि स्त्रीसदस्यां वार्तालाप-चिकीर्षुम् अन्यथा वा आत्मनः समीपम् आयांतीं दृष्ट्वा झटिति सभां त्यक्त्वा स्वगृहं प्रतस्थे। पुरुषसदस्यैः साकमपि केवलं कार्यमात्रं वार्तालापं कुर्वाणः आस।

सः स्वकीयाध्ययनकक्षे एकं गुप्तद्वारं ततः नगराद् बहिर्गन्तुमेकं भूगर्भमार्गं च चकार। सेवकसकाशात् 'कश्चिद् द्रष्टुं आगतः सज्जनः' इति श्रुत्वैव गुप्तद्वारेण पलायनं चक्रे। सः नित्यं प्रातः सायं नरान् बहिः जनविवर्जिते पथि भ्रमणं चक्रे। एकदा इत्थमेव प्रातः काले भ्रमणं कुर्वाणः सः पृष्ठतः एकम् उन्मत्तं वृषभम् आयान्तं तथैव अग्रे एकां कृषक-बालिकां गच्छंतीं ददर्श। वृषभं समीपमायांतं दृष्ट्वा सः तालिकावादनेन आक्रोशेन च तां सावधानां कर्तुं प्रायतत। परं स्व-क्षेत्रे गच्छंती अन्यमनस्का सा तं न शुश्राव। वृषभं तु निकटमेव प्राप्तं दृष्ट्वा अग्रे पदं निधाय तां करेण धृत्वा कर्षयित्वैव सः वृषभमार्गात् दूरां चकार। परं तत्क्षणे एव तस्य मनः 'हन्त, ब्रह्मचर्यं भग्नम्' इति विचारेण पश्चात्तापयुक्तं बभूव। ततः एव निर्वृत्य द्रुतगत्या स्वगृहं गत्वा, भयभीतः इव सर्वाङ्गे स्वेदरोमांचयुक्तः ज्वरग्रस्तः, सः सुष्वाप। द्वितीये दिने सः स्वस्थो बभूव। परंतु ततः ऊर्ध्वं सः गृहाद् बहिर्गमनमेव तत्याज। एष तस्य वार्धक्यावस्थायाः प्रसंगः आस।

(एषा कथा अस्मान्भरतराजः दयावशतायां हरिणासक्तेश्च हरिणजन्मन्यपि असङ्गवृत्तेः कथां स्मारयति।)

इंग्लंडदेशे अद्यावधि 'कॅव्हेंडिश-प्रयोगशाला' नाम्नी संस्था प्रचलति। सः विद्युच्चुंबकीय-लहरीनां अध्ययने विख्यातः आस। सः कदाऽपि धर्मयोगविषयकां वार्तामपि न चकार।

परम् इत्थं ब्रह्मचर्यपालने दत्तचित्ताः साधवः अपि विरलाः एव लभ्यंते। अहो बलवन्तः अस्य पूर्वजन्मसंस्काराः।

---

शिशुगीतम् २

## एहि शुभालोक

एहि एहि दीप
एहि शुभालोक।
धियं देहि दीप
श्रियं देहि दीप।
एहि शुभालोक—

के. रा. जो.

---

(द्वितीयपृष्ठतः)

अज्ञातवासं स्वीकृत्य माधवनाथः साधनामारभत। अखिले भारते व्यचरत् सः। नवनाथानामाशिर्वादाः प्रत्यक्षं प्राप्ताः तेन। महतां साधूनां कृते प्रकटोऽभवत् सः।

तथा भूतेषु सांसारिकेषु व्यवहारेषु वर्तमानेनापि तेन परमार्थप्रपञ्चः साधु साधितः। अशेषो महाराष्ट्र देशः तस्यालौकिकेन सामर्थ्येण प्रभावितो भूत्वा तमभजत्। निर्धनाः धनिकाः नृपादयश्च सर्वे कृतार्थाः अभवन्। अलसाः उद्योगिनो भूताः। केचित् विशिष्टाः साधकाः योगमार्गमारूढवन्तः। यज्ञयागादयः सम्पन्नाः अभवन् मन्दिराणि निर्मितानि च। सात्विकं स्वल्पाहारं कृत्वा आत्मनः तेजोमयीं कायां सः परोपकारार्थं जनानां समुद्धारणार्थं च समर्पितवान्।

गच्छता कालेन इंदूर नगरे श्रीनाथमन्दिरस्य निर्माणं कृतं भक्तजनैः। भाव्यानि प्रसादचिह्नानि दृष्टिपथमागतानि।

श्रीनाथमन्दिरस्य सुचारुरूपेण कार्यं सञ्चलनार्थं निश्चितं संविधानं रचितं तदनुसारमिदानी सर्वं कार्यमनुष्ठीयते।

मम सद्गुरोः प्रसादतः प्रबुद्धाः ज्ञानदर्शनमज्ञानास्तु कल्याणाय आशिषः लब्धवन्तः। अशीतितमे वर्षे अयं स माधवनाथः अनन्ते अन्तर्हितोऽभवत्।

अद्यापि व्यक्ताव्यक्तरूपेण लोकोद्धाराय लोकहिताय च निश्चयेन मार्गदर्शनं चलत्येव।

अतः

कीर्तनं वाचया कृत्वा
रूप ध्यात्वा गुणान्स्मरन्।
लभेत दर्शनं स्वप्ने
प्रत्यक्षानुभवाय च॥

---

संस्कृत-भाषा-प्रचारि-सभायाः इदं साप्ताहिकं पत्रं श्री. पां. ना. बनहट्टी महोदयेन नारायण-मुद्रणालयं नागपुरम् इत्यत्र मुद्रितं, 'संस्कृत-भवितव्यम्' कार्यालयः मोर-हिन्दी-भवनम्, नागपुरम् इत्यत्र प्रा. वि. वि. वराडपांडे-महोदयेन प्रकाशतां च नीतम्।

Dr. V. Raghavan

महाराष्ट्र-मध्यप्रदेश-मद्रास-आन्ध्र-शासन-पुरस्कृतं साप्ताहिकं

पञ्जीकृत-क्रमाकः एन् १२०४
दूरध्वनि-क्रमांकः २२३५७

# संस्कृत-भवितव्यम्

संस्कृत-भाषा-प्रचारि-सभायाः मुखपत्रम्

**अद्यतनं सुभाषितम्**

**सूफी साधोः सूक्तिः**

एकः साधकः-" नित्यं भ्रमामि यन्नदीजलवन्मयि
अपि न वर्णो न गंधो वा उद्भवेत् । "

साधुः उत्तरति-" किं न स्थिरः समुद्रः एव भवसि ? येन हि
न वर्णः न गंधः वा ते परिवर्तेत । "

**सूफी साधुः बायजीद बस्तामी ।**

डॉ. के. रा. जोशी, एम्. ए., पीएच्. डी., साहित्याचार्यः          प्रा. दि. वि. वराडपांडे, एम्. ए.

वर्षम् २०, अंकः १५-१६ ] नागपुरम्, शनिवारः, दिनाङ्कः २२-८-७०, सौर श्रावण ३१, शके १८९२ [ वार्षिकं मूल्यम् रू. ६

## वार्ता-विहारः

### संस्कृत-पाठ्यक्रम-मण्डलस्य अध्यक्षपदे प्रा. आष्टीकराः

नागपुर-विश्वविद्यालये संस्कृत-पाठ्यक्रम-मण्डलस्य अध्यक्षपदे प्रा. म. भा. आष्टीकर-महाशयाः निर्वाचिताः सन्ति । संस्कृत-पाठ्यक्रम-मण्डलस्य प्रतिनिधित्वेन डॉ. के. रा. जोशी, प्रा. वि. श्री. भाण्डारी-महाशययोः कला-शाखा-मण्डले ( फॅकल्टी ऑफ आर्टस् ) निर्वाचनं संजातम् । निर्वाचितान् वयं सबहुमानम् अभिनन्दामः ।

### संस्कृत-प्राध्यापक-समितेः अध्यक्षपदे डॉ. लिमये-महाशयाः

ऐषमः नागपुर-विश्वविद्यालय-संस्कृत-प्राध्यापक-समितेः अध्यक्षपदे डॉ. श्री. कृ. लिमये-महाशयानाम् ऐकमत्येन निर्वाचनं संवृतम् । कार्यवाहपदे प्रा. गु. वा. पिपळापुरे महाशयाः सहकार्यवाहपदे प्रा. कु. कमल-वूट-महाशयाः निर्वाचिताः तिष्ठन्ति । सगौरवम् अभिनन्दनम् ऐकमत्येन निर्वाचितानाम् ।

### दोष-प्रामजनम्

सं. भवितव्यस्य गतांके महाराष्ट्र-शिक्षामंत्रिणं द्रष्टुं गते शिष्टमण्डले प्रा. स. गो. सोमलवाराणां नामनिर्देशः अनवधानतया विस्मृतः । तदर्थं गुरुवर्याणां क्षमां संप्रार्थ्य समुचितं दोषप्रमार्जनं क्रियते संपादकेन ।

### संस्कृत-दिवस-निमित्तम्

केन्द्रशासनादेशात् रक्षाबंधन-दिवसे ( श्रावण पौर्णिमास्यां ) संस्कृतदिवसः पालनीयः अभवत् ससमारंभम् । तन्निमित्तेन च संस्कृतपुस्तकानां प्रदर्शनं, संस्कृते नाट्य - गान - कथाकथनादिकं विदुषां संस्कृतस्य सर्वविध-महत्वविषये व्याख्यान-प्रवचनं, वेदविदां सत्कारः, एतादृशाः कार्यक्रमाः कर्तुं सूचिताः शासनेन । संस्कृत-प्रचारसंस्थाः एतत् सर्वं यथाशक्ति कुर्वन्ति एव सर्वदा । शासनस्य अनुकूला प्रवृत्तिः तावत् अभिनंदनीया । शासनगताः नेतारः एव संस्कृतस्य महत्वविषये परिचिताः कार्याः भवन्ति इति वयं मन्यामहे । अत एव अभिनंदामः केन्द्रशासनं श्रीमताम् उपराष्ट्रपतीना गोपालस्वरूप - पाठक-महोदयानाम् आध्यक्षे दिल्लीनगरे (मावळंकर सभागृहे) संस्कृत-दिवस निमित्तं सभासमायोजनार्थम् । डॉ. कर्णसिंह महोदयानां प्रेरणया इदं प्रावर्तत इति ते अपि अभिनदनीयाः ।

### प्रा. सावळापुरकराणां भाषणम्

भोसला वेदशास्त्र महाविद्यालये संस्कृत-दिन निमित्तं बालानां व्यवहार - संस्कृतमय-भाषणानि आयोजितानि आसन् । तत्र अध्यक्षत्वेन भाषमाणाः प्रा. पां. कृ. सावळापुरकर महोदयाः अवोचन्-

ये संस्कृतं पठन्ति तेषाम् एव पुरतः संस्कृतस्य माहात्म्यं महत्वम् उपयोगाः च गीयन्ते इति अनावश्यकम् । वस्तुतः संस्कृतविरोधिनां अथवा तत्र उदासीनानाम् एव पुरतः तेषां तेषां भाषासु (न संस्कृते) विद्वद्भिः प्रवचनं कर्तव्यम् । अत एव मराठीभाषया एव संस्कृतस्य बहुविधं महत्वं मया कथ्यते ।

प्रादेशिकभाषाणां जननी पोषणकर्त्री च इति यथा संस्कृत-भाषा महनीया तथैव पुरातनात् कालात् विचारमंथनस्य निष्कर्षाः अनेक - शास्त्रसाहित्ये काव्य-नाट्यादिवाङ्मये च संस्कृते एव संगृहीताः तिष्ठन्ति । अद्य प्रवर्तमानः अतिनूतनः अपि विचारः केनचित् रूपेण संस्कृतवाङ्मये अवलोक्यते एव । अथ च सद्यः विज्ञान-तंत्रविद्यादिषु यः जनतायाः समादरः दृश्यते तस्य पारिभाषिक-शब्दावली : बल-रा· प्रयोगिनी संस्कृतेन . सुलभ भवेत् । राजमान्या शास्त्रम एव भाषा जनः आद्रियते शास्त्राणां भाषा तु भारते संस्कृतम् अ अस्ति अपि । परं तस्य राजम संप्रति अभिनन्द्या तिष्ठति । साहाय्येन विना अपि (विना एव वा) संस्कृतप्रचारः अत्यावश्यकः । तत्साहाय्येन तावत् " अधिकस्य अधिकं फलं " सम्पत्स्यते इति ।

### छायाचित्रस्य अनावरणम्

कै. सौ. सुरुचिः बी. ए. पदवी भूषिता, समचिकित्सा ( होमिओपथी ) जीवनरसायनचिकित्सा ( बायोकेमिक्स ) शास्त्रयोः पारंगता ( डी. एच्. बी ), बाल-शिक्षणपद्धतौ विनीता प्राप्तोपाधिका च नागपुरस्य प्राथमिकपूर्व-अध्यापन मंदिरे शिशुचिकित्सिका, शैक्षणिक - मानस - शास्त्रस्य च व्याख्यात्री आसीत् । तत्र तस्याः छायाचित्रस्य अनावरणं पद्मश्रिया विराजितायाः श्रीमत्याः कमलाताई हॉस्पेट महोदयायाः हस्तेन जातम् । संबंधितानां बहूना स्त्री पुरुषाणां भाषणानि तस्याः गुण-गौरवपराणि हृदयस्पर्शीनि अभवन् ।

### कै. म. म. बालशास्त्रि हरदासानां द्वितीया पुण्यतिथिः

संस्कृतक्षेत्रे सुविख्यातः नाग-पुरस्थः विशालबुद्धिः चतुरस्र पंडितः वाग्मी म. म. बालशास्त्री हरदासः भोसला वेदशास्त्र महा-विद्यालय-समितेः अध्यक्षः आसीत् दक्षिणामूर्ति-मंदिरस्य मठाधीशः अनेक-ग्रंथानां लेखकः, हिंदुमहा सभायाः कार्यकर्ता प्रचारकः, महाराष्ट्र संस्कृत परिषदः अध्यक्षः च अतिष्ठत् । तस्य द्वितीय-पुण्य-तिथौ भोसला वेदशास्त्र महाविद्यालये श्रद्धांजलि-समर्पण रूपाणि भाषणानि डॉ. ग. त्र्यं. देशपांडे, प्राचार्य दि. वि. वराडपांडे, डॉ. के. रा. जोशी तथा प्रा. शास्त्री प्रभृतीनां जातानि । बाल-शास्त्रिणां पुरातनाः गुरवः श्री. ज. मा. कायंदे महाशयाः अध्यक्षाः आसन् । तैः अपि शास्त्रिणां बाल्यस्य, विशालस्य तद्विकासस्य च कथाः श्राविताः एतादृशानां स्मरणं स्फूर्तिप्रदं भवतु स्वकर्तव्य-करणें इति निवेदितम् ।

### खेदप्रदानि निधनानि

### १. डॉ. सौ. इरावती कर्वे

भारतस्य समाजशास्त्रीयं विज्ञानं संशोधन-गवेषणादिभिः आलोड्य प्रगटीकरणे तत्र सदैव निरता महाराष्ट्रीया विदुषी डॉ. सौ. इरावती कर्वे-महोदया अकाल-निधनं प्राप्त इति खेदकरी वार्ता । महाभारतस्य समाजशास्त्रदृष्ट्या सम्यक् अध्ययनं पर्यालोचनं च तया कृतम् आसीत् अनेके ग्रंथाः निबंधाः च तया लिखिताः सन्ति ।

### २. श्री. मनोहरभाई पटेलः

विदर्भेषु गोंद्यानगरे धूम्रवर्तिका-व्यापारे संगृहीतवित्तः कोटयधीशः श्रीमान् मनोहरभाई पटेल-महाशयः अकाले पंचत्वं गतः इति खिद्यामहे । सः शिक्षणसंस्था विषये अतीव उदारः आसीत् । अनेकाः संस्थाः तेन संचालिताः सन्ति ।

### प्रा. दि. वि. वराडपाण्डे-महाशयानां कन्यावियोगः ।

सं. भवितव्य संपादकानां प्रा. दि. वि. वराडपाण्डे-महाशयानां ज्येष्ठा, सौभाग्यसंपन्ना, सौ. सुरुचि-गिजरेनाम्नी कन्या तरुणे वयसि अकालमृत्युना कवलिता । तस्याः निधन-दुःखेन परं पीडितेषु आप्तजनेषु शोकसहनाय धैर्यं परमेशः करोतु । सं. भवितव्य-परिवारः तेषां दुःखे संविभागम् अनुतिष्ठति ।

संस्कृतं संस्कृतेर्मूलम् ।

# संस्कृत-भवितव्यम्

संवत् २०२६. श्रावण कृष्ण ६

तावदेव प्रतिष्ठा स्याद् भारतस्य महीतले ।
ज्ञानामृतमयी यावत् सेव्यते सुरभारती ॥

## संस्कृत–दिवसः

ऐषमः अपि भारतशासनेन आभारतं श्रावण पूर्णिमायाम् संस्कृत–दिवसः मानयितव्यः इति आदेशः प्रसारितः । गते सप्ताहे तदनुरोधेन यत्र तत्र भाषणसमारम्भाः संमेलनादीनि वा यथारुचि यथाशक्ति लोकैः अनुष्ठितानि । संस्कृत–महिम्नः स्तोत्रं यथाबलं व्याख्यातृभिः गीतम् । परम् एतत् शृण्वतः सामान्य–नागरिकस्य विचित्रा खलु स्थितिः भवति । सर्वं वर्षं सुखं शयानः अयं समाजः सहसा जागरितः संस्कृत–विषये भूतावेशन्यायेन किमपि अश्रुतचरं किमर्थं ब्रूते इति ज्ञातुं सः न प्रभवति । दैनिक–कार्यात् क्षणं विरमन् ईषद् विस्मयाकुलः प्राकृतः जनः पुनः स्वकार्ये रमते ।

### सुयोग्यः उपक्रमः

एवं गते अपि संस्कृत–संमानहेतुः अयं शासकीयः उपक्रमः सर्वथा वृथा तिष्ठति इति न मन्यामहे । शासकानां हृदये क्वचित् कोणे स्थिता संस्कृत–विषयिणी आदरभावना अनेन प्रकाशते । अनेन कार्यक्रमेण वयं संस्कृतविषये यद् अस्माभिः गते वर्षे कृतं तस्य चिन्तनं कर्तुं प्रभवामः । अपि च आगामिनि वर्षे यत् कार्यं तस्य निश्चयं कर्तुं प्रभवामः । इदं सिंहावलोकनं नः संस्कृत–प्रियाणां नितराम् आवश्यकम् । वयं जीवनार्थे यस्मिन् कस्मिन् अपि क्षेत्रे श्राम्यामः । परं संस्कृत–साहित्यज्ञानं देशकल्याणस्य निधानम् इति भावना नः बलवत् प्रवर्तयितुम् अर्हति । वयं स्वानुभवेन इदं लिखामः यत् नागपुरे संस्कृत–वाग्विलास मण्डलस्य साप्ताहिके अधिवेशने ये खलु सज्जनाः आगच्छन्ति ये वा क्वचन सभाकार्यालये द्रष्टुं समागच्छन्ति तेषु अधिकतराः जीवने संस्कृताध्यापनेन संस्कृताध्ययनेन वा न साक्षात् संबद्धाः भवन्ति । कश्चित् स्थपतिः, कश्चिद् विज्ञानवेत्ता, कश्चित् संस्कृतेतर–विषयस्य अध्यापने निरतः प्राध्यापकः, कश्चित् अधिकोष–कर्मचारी, कश्चित् कृषिशास्त्रज्ञः, कश्चित् लेखाकर्मोपजीवी वा यदा आस्थया संस्कृत–विषये पृच्छति तदा मनः प्रमोदते । नायं केवलं पृच्छति अपि तु अध्ययने जिज्ञासां करोतीति चित्तं सानन्दं विस्मयते ।

### असंस्कृतज्ञा अपि बहुकर्तुम् अर्हन्ति

एतादृशाः जनाः संस्कृतस्य आशास्थानम् । यतो हि इमे सज्जनाः संस्कृत–विषये आस्थावन्तः समाजे संस्कृतविषये अनुकूलां परिस्थितिं जनयितुं क्षमाः । यद्यपि ते अनधीत–संस्कृताः अथवा अधीताल्पसंस्कृताः परं तेषां संस्कृतविद्या–प्रेम परेषां प्रोत्साहकं भवति । इमे जनाः स्वयं संस्कृतं पठितुं पुरः सरन्ति । पुत्रान् समुत्साहयन्ति, आप्तजनान्, तदीयपुत्रान् वा तथा कर्तुं बोधयन्ति, इतरजनान् अन्येषां वा अपत्यानि धनाभावेन संस्कृतपठने अक्षमाणि धनसाहाय्येन अनुग्रहीतुं शक्नुवन्ति । संस्कृत–संस्थानां कार्योत्साहे, औदासीन्य–निराकरणे, विविधकार्येषु प्रवर्तनेन अनुभव–धन–बलेन क्षमन्ते ।

संस्कृत-क्षेत्रम् एवं जनतामुखं जनतानुगृहीतं च आवश्यकम्।संस्कृत–विषये साधारणोऽपि मनुष्यः बहु कर्तुं क्षमः । संस्कृतज्ञः तेषां समुत्साहेन स्वम् अनुत्साहं त्यजतु। संप्रति संस्कृत–दिवस–निमित्तेन शोभावाक्यानि वदन्त्यः परं स्वक्षेत्रे संस्कृत–विषये कर्तव्यात् प्रमाद्यन्त्यः कतिपयाः संस्थाः तिष्ठन्ति । तासां जागरः लोकैः कर्तुं शक्यः । संस्कृत–दिवसः एवं प्रेरणां सर्वत्र जनयित्वा कृतार्थः तिष्ठतु इति वयं हृदयेन वाञ्छामः । तथा प्रवृत्ति समाजे निर्मातुं निमित्तं संपादयते भारतशासनाय धन्यवादान् वितरामः ।

---

## मम नाथः सद्गुरुः माधवनाथः

शांता मेघश्याम रेगे, एम्. ए., बी. एड्. साहित्याचार्या

अदृष्यशक्तिरूपेण लीलया भवतामहम् ।
योगक्षेमं वहामीति सत्यं, नास्त्यत्र संशयः ॥ १
स्नेहोऽस्ति यस्य सर्वत्र रतं लोकहिते मनः ।
ज्ञातं तेनैव धर्मस्य बीजं शुद्धं सनातनम् ॥ २

फलानि मधुराण्येव जायन्ते शुद्धबीजतः ।

एकदा श्रावणमासे सोमवासरे सौभाग्यवती मथुरामाता कस्यापि साधोः दर्शनमनायासेनैवालभत, शुभाशिर्वादांश्च प्राप्तवती यत्तस्याः तृतीयः पुत्रो महान् सिद्धयोगी भविष्यतीति । सः आदेशम् दत्तवान् यत् "तया नियमेन शिवाराधना कार्या" इति पुरतोवर्तिना नन्दिना सहिता उमामहेश्वरयोः प्रतिमापि तदर्थं तस्यै दत्ता । अग्रे सत्यमेव प्रमाणीभूतं तस्य वचनम् ।

चैत्रमासे वर्षप्रतिपदि ध्वजारोपणदिने जातो माधवः । दशमे वत्सरे स चित्रकूटपीठे प्रतिष्ठितः "माधवनाथ" इति विख्यातोऽभूत् ।

पूज्यपादैः श्री यशवन्त देव मामलेदार महोदयैः प्रागेव एतत्सर्वं सूचितम् । श्री विठ्ठलनाथ महानुभावाः पूर्वमेव सर्वां व्यवस्थामकुर्वन् । सर्वज्ञानाम् निःशेषोव्यवहारो निश्चयेन निर्दोषो भवति ।

अनाकलनीयाः माधवनाथलीलाविलास–परिपूर्णाः चमत्कृतयः दृष्टाः जनैः । सर्वेऽपि आधिव्याधयो विनष्टाः । सर्वविधं च मंगलं समृद्धम् ।

( शेषः चतुर्थपृष्ठे )

---

